# सांख्यसूत्रवृत्तिः ।

## प्रथमोऽध्यायः ।

विनायकं नमस्कृत्य विष्णुं सूर्यं सरस्वतीम् ।
लक्ष्मीं गङ्गां महेशानं वृत्तिं कर्त्तुं समारभे ॥

पुरुषः खलु वैराग्यात् मोक्षशास्त्रे प्रवर्त्तते । वैराग्यं च द्वेधा स्यात्, शोकादिना वा जन्मान्तरीयदुरितक्षयाद्वा । तथा च श्रुतिः 'यदहरेव विरज्येत्तदहरेव प्रव्रजेत्' इति । शास्त्रे प्रवृत्तस्य परवैराग्यात् मुच्यते । तथाह पतञ्जलिः "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यं, तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" । तदेव परवैराग्यं वक्तुम् अतिपरमकारुणिको महामुनिर्जगदुद्दिधीर्षुः कपिलो मोक्षशास्त्रमारभमाणः प्रथमसूत्रं चकार ॥

**अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥ १ ॥**

अथ इति अयं मङ्गलार्थो, न तु कर्मानन्तर्य्यार्थं, 'यदहरेव' इत्यादिश्रुतेरानन्तर्य्यस्य अप्रयोजनत्वात् । कर्मारम्भे च मङ्गलाचरणं न्याय्यं, अथशब्दश्च मङ्गलवाचको दृश्यते .

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मात् माङ्गलिकावुभौ ॥ इति ।

'त्रिविधदुःखे'ति शारीरमानसिकयोः आध्यात्मिकत्वेन सग्रह-

धात् एवमन्यम्। आधिभौतिकं पशुपक्ष्यादिजनितम्, आधिदैविकं यक्षभूतादिजनितम्। ननु एव तेषां निवृत्तिः स्वत एव भवति। यतः सुखदुःखानां क्षिप्रमपायित्वात्, अत आह 'अत्यन्ते'ति। न दुःखविशेषाणां निवृत्तिः अभिमता किन्तु दुःखजातीयानाम्। अविद्यमानानामपि हि निवृत्तिः अत्यन्त शब्दार्थः। धर्मार्थकाममोक्षाणां पुरुषार्थत्वे न तु प्रथमानाम् अत्यन्तत्वं अधिकत्वात् विषयकसुखत्वात् वा। मोक्षस्य च न तथा नित्यत्वाच्छ्रवणानुरूपत्वात्। अत उक्तं 'अत्यन्तपुरुषार्थ' इति।

भवतु दुःखनिवृत्तिः पुरुषार्थः तथापि दृष्टादेव सुकरोपायात् तत्सिद्धेः शास्त्रसाध्ये दुष्करोपाये अनेकजन्मपरम्परायासलभ्ये चित्तनिरोधादौ न कश्चित् प्रवर्त्तते। तथा च

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥

तथा हि शारीरदुःखनिवृत्तये औषधादयः सन्ति मानसदुःखनिवृत्तये मनोज्ञस्त्रीभक्ष्यादयः सन्ति आधिभौतिकदुःखनिवृत्तये च नीतिशास्त्राभ्यासादिभिः भीता नानाप्रकारा उपायाः सन्ति आधिदैविकदुःखनिवृत्तये च शान्तिमणिमन्त्रादयः सन्ति इत्यत उत्तरसूत्रम् ॥ १ ॥

न दृष्टात्तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात् ॥ २ ॥

न वयं निवृत्तिमात्रं पुरुषार्थं इति ब्रूमः, किन्तु उत्पत्तिनिवृत्तिम्। औषधादिना च नावश्यं दुःखं निवर्तते, यदि वा कदाचिन्निवर्तेत पुनरुत्पत्तेन न भवितव्यमिति नास्ति नियमः॥२॥

भवतु दुःखनिवृत्तिस्तथापि न पुरुषार्थः पुनःपुनस्तथाविधप्रतीकारकरणादित्यत आह ॥

प्रात्यहिकक्षुत्प्रतीकारवत् तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥ ३ ॥

यथा प्रत्यह क्षुत्प्रतीकाराय वराम्नभक्षणादिना व्यस्य पुरुषार्थता, तथा दु खनिवृत्तये औषधादिना पुनःपुनःप्रतीकारात् पुरुषार्थतेति ॥ ३ ॥

सिद्धान्तमाह ॥

सर्वासम्भवात् सम्भवेऽपि सत्तासम्भवाद्धेयः प्रमाणकुशलैः ॥ ४ ॥

न हि सर्वदेशे सर्वकाले वा वैद्यादयः वसन्ति। सम्भवेऽपि वा न अत्यन्तत्रिविधदुःखनिवृत्तिः स्यात्। अवश्य हि देहनिबन्धनात् रागादीना सम्भव., देही सुखीति न दृष्टमिति। तस्मादेष पुरुषार्थ विज्ञै. हेय., शास्त्रगम्यश्च उपादेयः॥

युक्त्यन्तरमाह ॥ ४ ॥

उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥

अथवा दु खत्रयनिवृत्ते अन्योऽन्यमुत्कर्षौ दृष्टो, मोक्षस्य सर्वोत्कृष्टो, नित्यत्वादेकत्वात्सर्वदुःखोच्छेदरूपत्वात् ॥ ५ ॥

ननु नास्त्येव तद्दर्शन यत्र मोक्षो न पुरुषार्थ., न च औषधादिना दु खनिवृत्तिमात्र मोक्ष। तस्माद् यस्तव सिद्धान्त सोऽस्माक भविष्यति इत्यत आह ॥

अविशेषश्चोभयोः ॥ ६ ॥

स्वपक्षसिद्धया परपक्ष उपालभ्यते, न त्वन्यथा। उक्तञ्च

यत्रोभयो समो दोषः परिहारोऽपि तादृश।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ ६ ॥

किं स्वभावतो बद्धस्य मोक्षसाधनोपदेशोऽन्यथा वा इत्यत आह ॥

**न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥७॥**

स्वभावनाशात् स्वरूपनाशप्रसङ्गात् । तथा च
वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता ।
विकल्पघटितावेतावुभावपि न किंचन ॥
एतदेव द्रढयति । ७ ।

**स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥ ८ ॥**

नित्यस्वभावस्य बन्धस्यानपायात्तदर्थमनुष्ठानमनर्थकमिति । ८ ।

कश्चिदिदमशक्यमपि उपदिशेत्, यथा मनुष्ये करियूथपतिमित्यत आह ॥

**नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ॥ ९ ॥**

अशक्यकार्याय उपदेशो न सम्भवति । उपदिष्टेऽपि न उपदेशः, निष्फलीभवति इत्यर्थः ॥

अत्र शङ्कते । ९ ।

**शुक्लपटवद्बीजवच्चेत् ॥ १० ॥**

स्वभावस्यापि नाशो दृश्यते यथा पटे शुक्लत्वस्य रागादिभिः बीजस्य वा वह्नितापात् अङ्कुरजननशक्तेः । १० ।

सिद्धान्तमाह ।

**शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥ ११ ॥**

सत्कार्यसिद्धान्ते पटस्य शौक्ल्यं नष्टं किन्तु रागादिना अभिभूतं क्षालनात् पुनरुद्भूतम् । अङ्कुरजननशक्तिरपि बीजे न नष्टा

किन्त्वभिभूत, तस्य च पुनरुद्भवो न दृश्यते इति वस्तुवैचित्र्यात् अथवा योगिसङ्कल्पादिभिः तच्छक्त्याविर्भावात् ॥ ११ ॥

नन्वात्मा स्वभावतो न बद्ध, किन्तु कालवशाद्बद्धो भविष्यतीत्यत आह ॥

**न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥ १२ ॥**

भवतु अय, यदि तस्य कदापि कालयोग स्यात् न स्याद्वा। नित्यस्य व्यापिनः सर्वकालसम्बन्धोपाधित्वात्। नित्यस्येति सर्वकालसम्बन्धे प्राप्ते। व्यापिन इत्युत्तरसूत्रपर्य्यालोचनया सम्यगातायातम् ॥ १२ ॥

देशवशाद्बद्धो भविष्यतीत्यत आह ॥

**न देशयोगतोऽप्यस्मात् ॥ १३ ॥**

व्यापिनो नित्यस्य सर्वदेशसम्बन्धादिति ॥ १३ ॥

अथावस्थातो बद्धो भविष्यतीत्यत आह ॥

**नावस्थातो देहधर्मत्वात्तस्याः ॥ १४ ॥**

तस्या अवस्थायाः। देहधर्मत्वादित्युपलक्षण, अपरिणामित्वादिति परमार्थ ॥ १४ ॥

आत्मनोऽप्यवस्था भविष्यतीत्यत आह ॥

**असङ्गोऽयं पुरुष इति ॥ १५ ॥**

असङ्गोऽयं पुरुष इति श्रुतिरस्ति, सा बाधिता स्यात् ॥१५॥

कर्मवशाद्बद्धो भविष्यतीत्येतद् दूषयति ॥

**न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥**

निर्गुणत्वादात्मनः कर्मणोऽनात्मधर्मत्वम्। किन्तु अन्यधर्मेणापि कर्मणा बद्धो भविष्यति। तदयुक्त, नहि अन्यधर्मेण

नाविद्यातोऽप्यवस्तुना बन्धायोगात् ॥ २० ॥

अविद्या हि विद्याप्रागभाव' प्रध्वंसाभावो वा। उभयथापि अवस्तु। न च अवस्तुना वस्तुन आत्मनः सम्भवति बन्ध। तस्मादविद्यया बन्ध इति व्यपदेशमात्र, न तत्त्वम् ॥२०॥

विद्यातोऽन्याऽविद्या वस्तुभूता भविष्यतीत्यत आह ॥

वस्तुत्वे सिद्धान्तहानिः ॥ २१ ॥

अस्माकं तावदविद्यायाः सद्रूपत्वे नाशाभावात् अनिर्मोक्ष' अद्वैतिना तु अविद्या न तात्त्विकी। द्वैतवादिना तु अनादेर्वस्तुभूतस्य नाशाभावात् उपदेशानर्थक्यम् ॥ २१ ॥

दूषणान्तरमाह ॥

विजातीयद्वैतापत्तिश्च ॥ २२ ॥

यद्यविद्या वस्तुभूतादि अनादिस्तदा नित्या आत्मतुल्या। अनात्मत्वे विजातीयद्वैतत्वम् ॥ २२ ॥

अथान्यपदार्थानामीदृशी गतिः। अविद्या तु वस्तुभूताऽनादिरपि विनङ्क्ष्यतीत्याह ॥

विरुद्धोभयरूपा चेत् ॥ २३ ॥

अन्योऽन्यविरुद्धरूपा अनादिरपि नाशात् प्रागभावरूपा ॥२३॥

उत्तरमाह ॥

न तादृक्पदार्थाप्रतीतेः ॥ २४ ॥

न कुत्रापि केनापि तादृक् पदार्थं प्रतीतः ॥ २४ ॥

यद्येव, प्रकृत्यादीना षट्पदार्थवैधर्म्यात् कुत्र प्रवेश इत्यत्राह ॥

न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ॥२५॥

स्पष्टम् ॥ २५ ॥

यद्यनियता. पदार्था., कथ पञ्चविंशतितत्त्वमित्यत्राह ॥

अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् ॥ २६ ॥

षडेव पदार्था इति न ब्रूमो न तु युक्तिहीनमपि नाङ्गीकुर्मः । अन्यथा बालोन्मत्ततुल्यत्वम् । तथा च

न ह्याकाशादधः पतन्ति महासुराः ।
युक्तिमद्वचनं ग्राह्यं मयान्यैश्च भवद्विधैः ॥ १९ ॥

बौद्धमतं निरस्यति ।

नानादिविषयोपरागनिमित्तोऽप्यस्य ॥ २७ ॥

अस्यात्मनोऽनादिविषयवासनानिमित्तो बन्धो भविष्यतीति न । अस्यात्मनस्तावद्वासनया सह आत्मनः सम्बन्धाभावाद् बन्धाभावः । बौद्धमते क्षिरस्थात्मनोऽवस्थानाद्वासनाया अपि तावन्मात्रं क्षिणिकभावात् को बन्ध इति ॥ २७ ॥

बाह्यवस्तूपरागात् वासनासन्तानेन आत्मसन्तानस्य बन्धो भविष्यतीत्यत आह ।

न बाह्याभ्यन्तरयोरुपरज्योपरञ्जकभावोऽपि देशव्यवधानात् स्रुघ्नस्थपाटलिपुत्रस्थयोरिव ॥२८॥

यद्युच्येत रक्तिमसम्भावनयोरपि इह उपरज्योपरञ्जकभावः तत्र रक्तिमस्याप्युपरागः, अत्र तत्सम्बन्धो नास्ति । वासनाद्वारैव चेत् न तासामाश्रयत्वात् कथं सम्बन्धः । सन्तानश्चेत् यदि सन्तानी व्यतिरिक्तः, सिद्धान्तहानिः । अथ अव्यतिरिक्तस्तथापि नैव किञ्चित् वाच्यम् । वाच्यानं त्वयाच अविद्यमानात् । सतामपि किं तेनासत्कल्पेनेति ॥२८॥

मा भूद्वासनया बाह्योपरागः । आत्मनो व्यापित्वादेकदेशेन बाह्यसम्बन्धात् उपरागो भविष्यतीत्यत आह ।

द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ॥ २९ ॥

एकात्मवादिनां सर्वदा लब्धविषमोपरागादनिर्मोच इति नास्ति व्यवस्था । नानात्मवादिनान्तु सर्वेषां सर्वार्थैः सम्बन्धात् एकदा तुल्यज्ञानोत्पादान्न व्यवस्था ॥ २९ ॥

अत्र शङ्कते ॥

अदृष्टवशाच्चेत् ॥ ३० ॥

यद्यपि सर्वदा सम्बन्धात् सर्वत्र ज्ञानं प्रसज्येत, तथापि यस्य अदृष्टेन यत्ज्ञानं जन्यते तदेव तस्य कारणमिति न सर्वत्र ज्ञानम् ॥ ३० ॥

दूषणमाह ॥

न द्वयोरेककालायोगादुपकार्य्योपकारकभावः ॥३१॥

द्वयोः कर्त्तृभोक्त्रोः एककालायोगात् एककालिकासत्त्वेन न उपकार्य्योपकारकभावः सम्भवति ॥ ३१ ॥

शङ्कते ॥

पुत्रकर्मवदिति चेत् ॥ ३२ ॥

यथा पुत्रेष्ट्यादिनाऽविद्यमानस्य पुत्रस्य संस्कारद्वारोपकारः क्रियते, तथा अत्रापि भविष्यति ॥ ३२ ॥

सिद्धान्तमाह ॥

नास्ति हि तत्र स्थिर एक आत्मा यो गर्भाधानादिकर्मणा संस्क्रियते ॥ ३३ ॥

आत्मा अनादिर्नित्यशुद्धबुद्धः, तदुद्देशेन हविस्त्यागादयो न युज्यन्ते इति ॥ ३३ ॥

आत्माऽस्थिरबोध इत्याह ॥

स्थिरकार्य्यासिद्धेः क्षणिकत्वम् ॥ ३४ ॥

पूर्वापरकालभावितामात्रात् कार्यकारणभावो भविष्यती-
त्यत आह ॥

पूर्वापाये उत्तरायोगात् ॥ ३९ ॥

भवेदेव, यदि अतिशयाधायकत्वं स्यात्। तदेव तु अशक्यं क्षणिकत्वादिति ॥ ३९ ॥

एतत् स्पष्टयति ॥

तद्भावे तदयोगादुभयव्यभिचारादपि न ॥ ४० ॥

हेतुहेतुमद्भावकाले कार्य्याभावादुभयव्यभिचारादपि न कार्य्यकारणभावः। आस्तां तावदर्थक्रियाकारित्वं, अयं हेतुरिदं कार्य्यमिति व्यवहारोऽपि न स्यात् ॥ ४० ॥

अथ हेतौ कार्यकाले सत्त्वमप्रयोजकं, पूर्वकालभाविता-मात्रेण भविष्यतीत्यत आह ॥

पूर्वभाविमात्रे न नियमः ॥ ४१ ॥

किं भिन्नसन्तानस्य, एकसन्तानस्य वा। भिन्नसन्तानस्य चेत् अतिप्रसक्तिः। एकसन्तानस्य चेत् निरन्वयध्वंसः। तस्य हि भिन्नसन्तानेन तुल्यत्वान्न नियमः। अन्वयश्च नास्तीत्युक्तम् ॥ अथ अविद्यमानस्यापि हेतुता दृश्यते, यथा इषुक्षेपकस्य क्षेपानन्तरं मृत्यस्यादिमरणं, पश्चादिषुविद्धस्य मरणकर्तृत्वम्। न, तत्रापि मरणे व्यापारद्वारेण अन्वयात् ॥ ४१ ॥

बाह्यवस्तूपरागाद् बन्ध इत्युक्तम्। ननु बाह्यं च वस्तु नास्ति, विज्ञानात्मकत्वाज्जगत इति विज्ञानवादिनं निराकरोति ॥

न विज्ञानमात्रं बाह्यप्रतीतेः ॥ ४२ ॥

न विज्ञानमात्रं जगत्। तथा सति अहं घट इति प्रत्ययः

स्यात्, न त्वयं घट इति। वासनाविशेषादिति चेत् न बाह्या-
भावे वासनाया एव असत्त्वात् क्व विशेषः। किञ्च ज्ञान-
मात्रं यदि कारणं ज्ञानमेव तत् बाह्यवासनापि। वासनापीति
चेदन्यस्यापि सत्त्वात् स एव बाह्योऽर्थः। ननु आरब्ध एव बाह्यो
ऽर्थः अवयवातिरिक्तावयविनोऽभावात्, तथा ह्यवयवावय-
विनो एकत्वात् एकत्वप्रतीतिः। चलति अवयवेऽवयवी चलति
अचलावयवे न चलति अवयवी। न चलतीति विरुद्धधर्माध्यासेन
भेदावश्यकत्वम्। एवं रक्तारक्तावृतानावृतत्वे ग्रहणे ग्रहणादिदोषा
ऊहनीया। मा भूत् अवयवी तथापि न बाह्याभावसिद्धिः,
परमाणुपुञ्जस्यैव स्थूलत्वेन ग्रहणात्। न, अवयविना वि-
नापि परमाणव अनुमातव्याः। तदभावे केन अनुमातव्याः। पर-
माणूनाम् अतीन्द्रियत्वात् पुञ्जेऽपि किञ्चिदतिशयाभावात्
स्थूलोऽयमिति प्रत्ययो भ्रान्त इति विज्ञानमात्रं जगदिति।
अत्र उच्यते। अवयवावयविनोर्भेदात्। यदि च द्वयोः अल्पत्वा-
दवयवयोरल्पोऽवयवी कल्प्यते यत्र तु बहुतरावयवसम्बन्धादा-
वयवी कल्प्यत एव। एवं रक्तारक्तादिविरोधेऽपि सिद्धान्ता-
वगन्तव्याः। तस्मात् सिद्धो बाह्योऽर्थः। वासनैवेति पक्षे सर्वदा
ज्ञानोत्पत्तिरिति ॥ ४२ ॥

निर्विषयस्य ज्ञानस्याऽसम्भवात् विषयाभावात् ज्ञानमपि नास्तीति शून्यवादी आह ॥

**तदभावे तदभावाच्छून्यं तर्हि ॥ ४३ ॥**

विषयाभावे ज्ञानाभावाच्छून्यम्। अविषयत्वे कर्तृकर्मविरोध इति ॥ ४३ ॥

**शून्यं तत्त्वं, भावो विनश्यति, वस्तुधर्मत्वाद्विनाशस्य ॥ ४४ ॥**

यदि भावरूपं तत्त्वं स्यात् भावस्य नाशात् तत्त्वनाशेऽनिर्मोक्षः, वस्तुधर्मत्वात् विनाशस्य वस्तुनोऽवश्यं विनाशात् ॥४४॥

समाधानमाह ॥

अपवादमात्रमबुद्धानाम् ॥ ४५ ॥

अभावो न नश्यतीति वाङ्मात्रं, न तु तत्त्वम्। अबुद्धाना अज्ञातशास्त्राणाम्। प्रागभावस्य विनाशदर्शनात्, सत्कार्यसिद्धौ भावस्य अविनाशात्। तिरोभावे नाशशब्दप्रयोगेऽपि प्रकृतिपुरुषयोरनाशात् ॥ ननु अभाव एव नास्ति कुतस्तस्य नाशानाशचिन्ता। कथं तर्हि अघटं भूतलमिति ज्ञानम्। भूतलालम्बनं चेत्, घटवति अपि भूतले तदभावज्ञानप्रसङ्गः, भूतलस्य तादवस्थ्यात्। केवलभूतलालम्बनम् अभावज्ञानं, घटे सति कैवल्यं नास्तीति चेत्, किं भूतलस्वरूपमात्रं कैवल्यं तदतिरिक्तं वा? यदि स्वरूपमात्रं, घटे सति अपि तस्य सद्भावादभावज्ञानं स्यात्। अतिरिक्तपक्षे स एव अभावः ॥ अथ भूतलस्य एकाकित्वेऽभावव्यवहारः, घटे सति एकाकित्वं नास्तीति क्व अभावव्यवहारहेतुः। तत् न। एकाकित्वमेकत्वसङ्ख्या वा अन्यद्वा। एकत्वसङ्ख्या च घटवत्यपि भूतलेऽस्ति। अन्यदिति पक्षे स एव अभावः। विषयावैलक्षण्ये विज्ञानवैलक्षण्याभावात् ॥ ननु भावाभावयोः सम्बन्धाभावात्कथमभावज्ञानमिति ?। यथा घटोऽयमितीन्द्रियान्वयव्यतिरेकात् ज्ञानं, तथा अभावज्ञानमपि सकारणम्। कार्यदर्शनाद्धि कारणं परिकल्प्यते, न तु दृष्टकार्यापलापः शक्यते वक्तुम्। किञ्च अनियतपदार्थवादित्वात् अस्माकं यथोपपन्नः सम्बन्धोऽपि कश्चिद्भविष्यतीति का नो हानिः। तस्मात्सिद्धोऽभाव इति ॥ ४५ ॥

समाधानान्तरमाह ॥

स्यात् सङ्कोचविकासित्वेन सावयवत्वात् अनित्यत्वमिति ॥५०॥

एवं चाङ्गुष्ठमात्रमित्यादिश्रुतिविरोध इत्यत आह ॥

**गतिश्रुतिरप्युपाधियोगादाकाशवत् ॥ ५१ ॥**

यथा घटाद्युपाधिभेदात् घटे गच्छति घटाकाश गच्छतीति ज्ञान, तथा शरीराद्यवच्छेदात् आत्मा गच्छतीति प्रतीतिः ॥ ५१ ॥

किमुपाधिना, कर्मवैचित्र्यात् विशेषो भविष्यतीत्यत आह ॥

**न कर्मणाप्यतद्धर्मत्वात् ॥ ५२ ॥**

भवेत् एव, यदि कर्मात्मधर्मः स्यात् । न तु आत्मन कश्चित् धर्मोऽस्ति, निर्गुणत्वात् ॥५२॥

तद्धर्म एव कर्म भविष्यति, को विरोध इत्यत आह ॥

**निर्गुणादिश्रुतिविरोधश्चेति ॥ ५३ ॥**

'असङ्गो ह्यय पुरुष' इति श्रुतिविंरुद्धा स्यात् ॥५३ ॥

मा भूत् आत्मधर्मोऽन्यधर्मेणापि क्रियाविशेषो भविष्यति आत्मनो व्यापित्वेन सर्वसम्बन्धादित्यत आह ॥

**अतिप्रसक्तिरन्यधर्मत्वे ॥ ५४ ॥**

सर्वसम्बन्धाविशेषात् मुक्तात्मनामपि बन्धप्रसक्तिः ॥ ५४ ॥

ननु तवापि धर्माधर्मव्यवस्था अस्ति, तदस्य मुक्त्यर्थं प्रवृत्ति-र्दृश्यते । तत्र यस्तव सिद्धान्त, सोऽस्माकं भविष्यतीति समानमित्यत आह ॥

**तद्योगेऽप्यविवेकान्न समानत्वम् ॥५५॥**

धर्माधर्मयोगेऽपि न समानधर्मत्व, अविवेकात् । यदि तात्त्विको धर्माधर्मयोग आत्मन स्यात् तदा तुल्यत्वम् । किन्तु अविवेकादात्मनो धर्माधर्मयोगाभिमान इति न समानत्वम् ५५

द्रव्यान्तरमिति केचित्। तदुक्तं

तमः खलु चलन्नीलं परापरविभागवत्।
प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥

अथ भवतु गुणो वा द्रव्यं वा, नास्माकं सिद्धान्तक्षतिः? अनियतपदार्थवादित्वात्। अभावस्तु न भवतीति ब्रूमः॥५६॥

विवेकात् मुक्तिरित्युक्तम्। घटपटादीनां विवेकोऽस्मदादीनामपि अस्तीति सर्वमुक्तिप्रसङ्ग इत्यत आह॥

## प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम्॥५७

सर्वेषां मूलं प्रधानम्। तस्य अविवेकात् अन्याविवेकस्य सम्भवः। पदार्थानामन्योऽन्यं भवतु अविवेको विवेको वा, न तेन बन्धमोक्षौ, किन्तु प्रधानविवेकाविवेकाभ्याम्। अतस्तद्धाने प्रधानाविवेकहाने सर्वाविवेकहानम्॥ ५७॥

भवतु विवेकात् मुक्तिः। स किमात्मसम्बन्धी न वा? आत्मसम्बन्धी चेत्? आत्मनः कूटस्थत्वव्याघातः। असम्बन्धी चेत्? अतिप्रसक्तिरित्यत आह॥

## वाङ्मात्रं तु, न तत्त्वं, चित्तस्थितेः॥ ५८॥

आत्मसम्बन्धीति वाङ्मात्रं तु, न तात्त्विकः सम्बन्धः। असम्बन्धेऽपि चित्ते विवेकस्थितेः चित्तसन्निधानात् आत्मनि विवेकाभिमान इति निवेदयिष्यामः॥ ५८॥

भवतु श्रवणादेव विवेकज्ञानम्। अनेकजन्मायाससाध्येन अपरोक्षज्ञानेन किमित्यत आह॥

## युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते॥ ५९॥

व्यक्तम्॥ ५९॥

पञ्चमात्रादयः सन्ति ते च शब्दादिविशेषपरिणमन्त इति न दृष्टमित्यत आह ।

**अचाक्षुषाणामनुमानेन बोधः, धूमादिभिरिव वह्नेः ॥ ६० ॥**

सर्वेदेवं यदि प्रत्यक्षमेव प्रमाणं नानुमानादिकमिति। प्रकृत्यादीनामदर्शनेऽपि सामान्यतो दृष्टानुमानात् सिद्धिः ॥६०॥

प्रकृत्यादीनां स्वरूपमाह ।

**सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्महतोऽहङ्कारोऽहङ्कारात्पञ्च तन्मात्राणि, उभयमिन्द्रियं, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः ॥ ६१ ॥**

यद्यपि सत्त्वादीनां साम्यावस्था प्रकृतिः तथापि एकैकस्मिन्नपि प्रकृतिशब्दप्रयोगः सार्वत्रिकः। महानिति बुद्धितत्त्वम्। अहङ्कार इति अभिमानः। पञ्च तन्मात्राणीति शब्दस्पर्शरूपरसगन्धाः। उभयमिन्द्रियं बाह्यं पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि पञ्च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि आन्तरं मनः। स्थूलभूतानि आकाशवाय्वग्निजलभूमयः। तेषां च पञ्चतन्मात्रेभ्य उत्पत्तिरिति बोध्यम्। स्थूल इत्युपलक्षणं सूक्ष्मभूतानामपि ग्रहणम्। पुरुष इति संख्यापूरणार्थं न तु परिणामार्थं नित्यत्वात् चात्मनः ॥६१॥

कार्यात् कारणानुमानार्थं प्रातिलोम्यमाह ।

**स्थूलात्पञ्चतन्मात्रस्य ॥ ६२ ॥**

स्थूलात् पञ्चभूतात् कार्यात् उपचयापचयभेदेन शान्तघोरमूढरूपात् पञ्चतन्मात्रस्य ज्ञानम् ॥ ६२ ॥

**बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य ॥ ६३ ॥**

बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्य्यैरहङ्कारस्य ज्ञानम् ॥ ६३ ॥

**तेनान्तःकरणस्य ॥ ६४ ॥**

तेनाहङ्कारेण कार्य्येणान्तःकरणस्य बुद्धेर्ज्ञानम् ॥ ६४ ॥

**ततः प्रकृतेः ॥ ६५ ॥**

ततो महत्तत्त्वात् कार्य्यात् प्रकृतेर्ज्ञानम् ॥ ६५ ॥

**संहतपरार्थत्वात् पुरुषस्य ॥ ६६ ॥**

न प्रकृतेः कार्य्यत्वात् पुरुषस्य ज्ञानं, प्रकृतेर्नित्यत्वात् पुरुषस्य अकारणत्वात्। किन्तु प्रकृतेः संहतत्वात् त्रिगुणात्मकत्वात् परार्थत्वम्। परश्च पुरुषः। अतः तस्य ज्ञानम्। स च असंहतो वक्तव्यः, अनवस्थाभयात् ॥ ६६ ॥

अथ प्रकृतेः कारणं भविष्यतीत्यत आह ॥

**मूले मूलाभावादमूलं मूलम् ॥ ६७ ॥**

मूलप्रकृतेर्मूलाभावात् कारणाभावात् अमूलं यत् कारणं तन्मूलम्। सा प्रकृतिः ॥ ६७ ॥

अत्र युक्तिमाह ॥

**पारम्पर्य्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ॥ ६८ ॥**

प्रकृतेः अन्यत् कारणं, तस्यापि अन्यत् कारणमिति अनवस्थादोषादन्ततोऽकारणं मूलं वक्तव्यम्। सैव प्रकृतिरिति। पञ्चविंशतितत्त्वात् अधिकाङ्गीकारे च गौरवं स्यात् ॥ ६८ ॥

प्रकृतेरप्रत्यक्षत्वात् कथं कारणत्वावगम इत्यत आह ॥

**समानः प्रकृतेर्द्वयोः ॥ ६९ ॥**

द्वयोर्वादिप्रतिवादिनोः तुल्यत्वम्। यथा परमाणोः अप्रत्य-

**आद्यहेतुता तद्द्वारा पारम्पर्य्येऽप्यणुवत् ॥७४॥**

यथा मृत्पिण्डकार्य्यस्य घटस्य पारम्पर्य्येऽपि परमाणुकारणता, तथा प्रकृतेरपि मूलकारणता ॥

प्रकृतिपुरुषयोर्नित्यत्वात् सृष्ट्यादौ कस्य कारणत्वमित्यत आह ॥ ७४ ॥

**पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ॥ ७५ ॥**

न पूर्वभावित्वमात्रेण कारणत्वं, किन्तु अन्वयव्यतिरेकाभ्याम् । द्वयोर्मध्य एकतरस्य पुरुषस्य कारणत्वयोग्यताहानि' अविकारित्वश्रुतेः । अतोऽन्यतरस्य प्रधानस्य कारणत्वयोग ॥७५॥

अविवादात् परमाणूनामेव कारणत्वमस्तु इत्यत आह ॥

**परिच्छिन्नत्वान्न सर्वोपादानम् ॥ ७६ ॥**

यत् परिच्छिन्नं न तत् सर्वोपादान, यथा न तन्तुर्घटस्य कारणम् । तस्मात् पदार्थानां पृथक् पृथक् कारण वक्तव्यम् । एककारणत्वे च लाघव स्यादिति ॥ ७६ ॥

अत्र श्रुतिं दर्शयति ॥

**तदुत्पत्तिश्रुतेश्च ॥ ७७ ॥**

युक्तिस्तावत् प्रोक्ता । श्रुतिरपि प्रधानस्य जगत्कारणतामाह 'प्रधानाज्जगज्जायते' इति ॥ ७७ ॥

प्रागसतो घटस्य भवन दृश्यते । नियतपूर्वभावित्वात् प्रागभाव कारणमस्तु इत्यत आह ॥

**नावस्तुनो वस्तुसिद्धिः ॥ ७८ ॥**

नाभावात् भावोत्पत्ति. । कारणरूप कार्य्यं दृश्यते इति जगतोऽपि अवस्तुत्वम् ॥ ७८ ॥

वेदोक्तार्थानुष्ठानादेव मुक्तिसम्भवात् किं प्रकृत्या इत्यत आह ॥

**नानुश्रविकादपि तत्सिद्धिः, साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ॥ ८२ ॥**

वेदादनुश्रूयते इति आनुश्रविको यागादि । तस्मादपि न मोक्षसिद्धिः, साध्यत्वेनावृत्तियोगात् । कार्य्यत्वेन अनित्यत्वात् मुक्तस्य पुनः संसारानुवृत्तियोगः । तस्मात् अपुरुषार्थत्वम् ॥८२॥

पुरुषार्थत्वं दर्शयति ॥

**तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥ ८३ ॥**

तत्र प्रकृतिपुरुषयोः प्राप्तविवेकस्य विविक्तज्ञानात् अनावृत्तिश्रुतिः । 'न स पुनरावर्तते' इति श्रुतिः ॥८३॥

विपक्षे दोषमाह ॥

**दुःखाद् दुःखं, जलाभिषेकवन्न जाड्यविमोकः ॥ ८४ ॥**

यदि कर्मसाध्यो मोक्षो भवेत्, कर्मणो दुःखबहुलत्वात् तत्कार्य्यो मोक्षोऽपि दुःखबहुलः स्यात् । अन्ततः क्षयित्वेनापि दुःखं स्यात् । नहि जाड्यार्त्तस्य जाड्यविमोक्षो जलाभिषेकात्, प्रत्युत जाड्यमेवेति ॥

दुःखस्य कर्मसाध्यत्वमप्रयोजकं, किन्तु काम्यकर्मसाध्यत्वं हेतुः, निष्कामकर्मणो मोक्षसाधनत्वात् । तथा च श्रुतिः । कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः ॥८४॥

अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुरित्यत्राह ॥

**काम्याकाम्येऽपि साध्यत्वाविशेषात् ॥८५॥**

मा भूत् मिथ्याज्ञानकर्मणायं दुःखं तथापि चाध्यात्मिका मध्वर्णविधेयेऽपि मोक्षस्य जनसाध्यत्वमविशिष्टम् । साध्यत्वात् च्यवित्वेन पुनरपि दुःखं स्यात् । मिथ्याज्ञानजन्यो मोक्षभाव मलस्तुतिव ज्ञानार्थं ज्ञानात् मोक्ष इति पारम्पर्य्येण मोक्षसाधनत्वम् ॥ ८५ ॥

यदि प्रकृतिपुरुषविवेकज्ञानात् मोक्षो भवेत् तथापि चवित्वात् पुनरपि संसार इति वादिमतिवादिनो तुल्यत्वमिति तत्राह ॥

नियतमुक्तस्य बन्धध्वंसमात्रं परं, न समानत्वम् ॥ ८६ ॥

नियतमुक्तस्य ज्ञानवमुक्तस्य बन्धध्वंस । बन्धोऽविवेकः, तद्विरोधेन चविवेकध्वंसो नाश । चविवेकनाशस्य च प्रध्वंसत्वात् कुतः संसारस्य पुनरावर्त्तनमिति समानत्वम् ॥ ८६ ॥

पञ्चविंशतितत्त्व ज्ञात्वा तन्निश्चित्य न प्रमाणेन विनेति । तद्दर्शयति ॥

द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा । तत्साधकतमं यत् तत् ॥ ८७ ॥

'द्वयोः' बुद्धीन्द्रियार्थयोर्विषयज्ञानतया प्रमये । 'एकतरस्य वापि' इति विषयमानस्य विरूप ज्ञानस्य वाऽनुमानं यत्रे च । 'असन्निकृष्टार्थपरिच्छित्तिः' इति अपरिच्छिन्नार्थपरिच्छित्तिः प्रमा प्रमितिः फलम् । अनेनानधिगतार्थगन्तृप्रमाणमित्युक्तम् । प्रमासाधकतमं यत् तत् प्रमाणमिति प्रमाणसामान्यलक्षणम् ॥ ८७ ॥

इति प्रमाणानीक्षत पाठ ।

त्रिविधं प्रमाणम् । तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥ ८८ ॥

प्रत्यक्षानुमानशब्दाः प्रमाणानीति । किमुपमानार्थापत्त्यभावसम्भवैतिह्यानि न स्युरिति । अत्रोक्तं 'तत्सिद्धौ' इत्यादि । प्रमेयव्यवस्थार्थं प्रमाणस्वीकारः । त्रिविधप्रमाणसिद्धौ सर्वप्रमाणानां प्रमेयव्यवस्थासिद्धेर्नाधिक्यसिद्धिः पृथक्प्रमाणत्वेन, त्रिविधप्रमाणेषु एषामन्तर्भावादिति । इन्द्रियार्थसन्निकर्षान्वयव्यतिरेकादिना यथायथं प्रत्यक्षादिषु सूरिभिरन्तर्भावितत्वात् केवलमधिकः सञ्ज्ञाभेदः कृत इति नाधिकत्वेन प्रमाणसिद्धिः ॥ ८८ ॥

विशेषलक्षणमाह ॥

यत्सम्बन्धसिद्धं तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम् ॥ ८९ ॥

'यत्सम्बन्धसिद्धम्' इत्यनुमानशब्दौ व्यवच्छिन्नौ । तदाकारोल्लेखि घटाकारोल्लेखि । तत्प्रत्यक्षम् । सविकल्पकमपि प्रत्यक्षं सङ्गृहीतम् । बौद्धास्तु निर्विकल्पकमेव प्रत्यक्षमिति वर्णयन्ति, कल्पनापोढमभ्रान्तं प्रत्यक्षमिति । नामजात्यादियोजनात्मिका प्रतीतिः कल्पना, सा च सविकल्पकेऽप्यस्तीति न प्रत्यक्षं प्रमाणम् । तत् न । अदुष्टसाक्षात्कारिप्रमाजनकसामग्रीजनितं प्रत्यक्षम् । तदुभयं, निर्विकल्पकं सविकल्पकं च । किन्तु सादृश्यात्मसंस्कारोद्बोधद्वारेण स्मृत्या नामजात्यादिसंविदुत्पद्यते । अत एवाधिकप्राप्त्या सविकल्पकमिति विशेषसञ्ज्ञा । न च स्मृत्या कश्चिद्दोषः सामग्रीप्रत्यवायो वा

मितः । अथ व्याप्त्या सहितत्वात् प्रमाणम् । यतो वैपुल्यं व्यभिचारि प्रामाण्यं बाधते । तथा च

संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते ।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥
ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥ ८९ ॥

योगिप्रत्यक्षाव्यापकत्वादिदं प्रत्यक्षलक्षणमसिद्धमत आह ।

योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥ ९० ॥

बाह्यप्रत्यक्षलक्षणमिदं लौकिकं योगिप्रत्यक्षं तु अबाह्यमलौकिकम् । अतो नाव्यापकत्वदोषः ॥ ९० ॥

अथवा अनेन सूत्रेण योगिप्रत्यक्षस्यापि संग्रह इति पक्षान्तरमाह ।

लीनवस्तुलब्धातिशयसम्बन्धान्न दोषः ॥ ९१ ॥

अतीतघटमपि कारणे लीनं भूतत्वेन अस्ति भविष्यदपि कारणेऽनागतत्वेन अस्ति । योगजधर्मानुग्रहात् लब्धातिशयस्य योगिन एव प्रधानसम्बन्धात् सर्वदेशकालादिसम्बन्ध इति नाव्यापकत्वदोषः ।

ईश्वरप्रत्यक्षाव्याप्तिमाशङ्क्यत आह ॥ ९१ ॥

ईश्वरासिद्धेः ॥ ९२ ॥

यदीश्वरसिद्धौ प्रमाणमस्ति तदा तत्प्रत्यक्षचिन्ता उपपद्यते । तदेव तु नास्ति । क्षित्यादि सकर्तृकं कार्यत्वादिति प्रमाणमस्तीति चेत् स किं शरीरी अशरीरी वा उभयथापि कर्तृत्वासम्भवात् विशेषणादिना कार्यत्वस्याभासत्वात् । एतदन्यत्र बहु प्रपञ्चितम् ॥ ९२ ॥

युक्त्यन्तरमाह ।

**मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥९३॥**

स किं बद्धो वा मुक्तो वा । बद्धस्य धर्माधर्मयोगात् नेश्वरत्वम् । मुक्तस्य ज्ञानचिकीर्षाप्रयत्नाभावात् न कर्त्तृत्वमिति नेश्वरसिद्धि । अथ अन्य एव असौ जीवन्मुक्त इति । एव, तर्हि दृष्टान्ताभावात् असाधारणत्वम् ॥ ९३ ॥

एतदेवाह ॥

**उभयथाप्यसत्करत्वम् ॥ ९४ ॥**

उक्तव्याख्यानमेतत्सूत्रम् ॥ ९४ ॥

एव, तर्हि 'स हि सर्ववित्सर्वस्य कर्त्ता' इत्यादिश्रुतिबाध. स्यादित्यत आह ॥

**मुक्तात्मनः प्रशंसा, उपासासिद्धस्य वा ॥९५॥**

रागाद्यभावात् मुक्तात्मन इव मुक्तात्मन', न तु मुक्तस्य, तस्य सङ्कल्पकर्त्तृत्वाद्यभावात् । तत्प्रशसा विधिवाक्योत्तम्भनाय । 'उपासासिद्धस्य वा' इति उपासनया लब्धातिशयस्य योगिनोऽणिमादिसिद्धस्य प्रशसाभ्यासोत्तम्भनायेति ॥ ९५ ॥

चेतनाधिष्ठान विना नाचेतन प्रवर्त्तत इत्यतोऽपि नेश्वरसिद्धिरित्याह ॥

**तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥९६॥**

यथा प्रतिविम्बितशरीरे मणौ चलति अचलति शरीरे 'शरीर चलति' इत्यभिमानः, तथा तत्सन्निधानात् प्रकृतिप्रतिविम्बितत्वात् आत्मन प्रकृते. कर्त्तृत्व भोक्तृत्वमधिष्ठातृत्वमात्मनोऽभिमन्यते । तस्माच्चेतनोऽधिष्ठातेति भ्रान्तिरिति । तथा च

प्रकृते क्रियमाणानि गुणै' कर्माणि सर्वश ।<br>
अहङ्कारविमूढात्मा 'कर्त्ताहमिति' मन्यते ॥ ९६ ॥

णानि अत्रैव अन्तर्हितानीति। तथा च

अनुमेयेन सम्बन्ध प्रसिद्धस्य तदन्विते।

तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥ १००॥

शब्दं लक्षयति॥

आप्तोपदेशः शब्दः॥ १०१॥

आप्तोपदेश' शब्द., न तु आप्तेन कृत, अपौरुषेयत्वात् वेदस्य। अपौरुषेयत्वञ्च पञ्चमाध्याये 'न पौरुषेयत्वम्' इति सूत्रे प्रतिपादयिष्याम'। शब्द इति कारणकथन, फल तु शब्दजन्य ज्ञान शब्द, कार्य्ये कारणोपचारात्। शाक्यादि-वाक्याना वेदविरोधेन अयुक्तत्वात् आभासत्वम्॥ १०१॥

प्रकृतिपुरुषविवेकार्थं शास्त्रारम्भ। न च तयोः सिद्धौ प्रमाणमस्तीत्यत आह॥

उभयसिद्धिः प्रमाणात्तदुपदेशः॥ १०२॥

वक्ष्यमाणाद् प्रमाणात् प्रकृतिपुरुषयो' सिद्धिर्ज्ञानम्। तस्मात्तद्विवेकार्थमुपदेशो युक्त इति॥ १०२॥

किं तत् प्रमाणमित्यत्राह॥

सामान्यतो दृष्टादुभयसिद्धिः॥ १०३॥

प्रकृतेरप्रत्यक्षत्वात् यत्कार्य्यं तत् कारणगुणपूर्वक, कार्य्यं च त्रिगुणात्मकमिति सामान्येन प्रकृतिसिद्धि। आत्मनो-ऽप्रत्यक्षत्वेऽपि यत्संहत तत्परार्थमित्यसंहतः पर सिद्ध। वक्ष्यति च 'संहतपरार्थत्वात्'॥ १०३॥

प्रकृतेर्नित्यत्वात् प्रवृत्तिशीलत्वाच्च सर्वदा भोग इत्यनि-र्मोक्ष, स्यादित्यत आह॥

चिदवसानो भोगः॥ १०४॥

**विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥ १०८ ॥**

इन्द्रियस्य उपादानात् सम्बन्धात् विषयः । इन्द्रियस्य हानात् सम्बन्धाभावात् अविषयः । असम्बन्धश्च अतिदूरादेरयोग्यत्वात् ॥ अतिदूरात् वियति पक्षी नोपलभ्यते, अतिसामीप्यात् लोचनस्याञ्जनं, व्यवधानात् कुड्यस्य वस्तु, मनोऽनवस्थानात् शोकादिग्रस्तस्य पार्श्वस्थवस्त्वग्रहणं, सौक्ष्म्यादणोः, अभिभवात् मार्दलध्वनिना शङ्खध्वनिरित्यादि ॥ १०८ ॥

प्रकृतेः कथमनुपलब्धिरित्यत आह ॥

**सौक्ष्म्यादनुपलब्धिः ॥ १०९ ॥**

दुरूहत्वं सौक्ष्म्यं, न तु अणुत्वं, प्रकृतेर्विभुत्वात् ॥ १०९ ॥

कथं तर्हि प्रकृतिव्यवस्था इत्यत आह ॥

**कार्य्यदर्शनात्तदुपलब्धेः ॥ ११० ॥**

यथा घटदर्शनात्परमाणुज्ञानं, तथा त्रिगुणकार्य्यदर्शनात् प्रकृतिज्ञानम् ॥ ११० ॥

ब्रह्मकारणं जगदिति केचित्, परमाणुकारणमित्यन्ये, प्रकृतिकारणमिति वृथा इति संशयमाह ॥

**वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ॥ १११ ॥**

तदसिद्धिः प्रधानासिद्धिः ॥ १११ ॥

सिद्धान्तमाह ॥

**तथाप्येकतरदृष्ट्यान्यतरसिद्धेर्नापलापः ॥ ११२ ॥**

यदि वादिविप्रतिपत्तिमात्रेण पक्षासिद्धत्वं, विपक्षेऽपि विप्रतिपत्तिरस्तीति कथं तत्सिद्धिः । यदि व्याप्यज्ञानात् व्याप-

अज्ञानस्य चाविनाशित्वात् प्रकृतिः, ममाप्येवमिति न कार्यात् कारणानुमानापत्तेः ॥ ११२ ॥

कार्यात् कारणमस्तु तच्च प्रकृतिरिति कथमित्यत आह।

**त्रिविधविरोधापत्तेः ॥ ११३ ॥**

त्रिविधा गुणाः सत्त्वरजस्तमांसि। तद्विरोधे तन्मूलं जगत् भवेत्। न चैव दृश्यते इति ॥ ११३ ॥

कार्यस्य किं सत उत्पत्तिरसतो वेति संशयं निरस्यति।

**नासदुत्पादो नृशृङ्गवत् ॥ ११४ ॥**

असदेकस्वभावं नृशृङ्गादि सदेकस्वभावमाकाशादि सदसत्स्वभावा घटादय इति कथं नृशृङ्गतुल्यत्वम्। तन्न घटादीनां प्रागभावप्रध्वंसयोरसत्त्वं नृशृङ्गादीनां सर्वदाऽसत्त्वमिति द्वयोः को विशेषः। घटादीनां कपालदशायां विषय इति चेत् एतदेव चिन्त्यम्। एतदग्नोत्तरमिश्रको नैपुणम् ॥ ११४ ॥

सत्कार्ये न्यायमाह।

**उपादाननियमात् ॥ ११५ ॥**

कारणसम्बन्धात् कार्यस्य। सम्बन्धश्च विद्यमानयोरेव। अन्यथा सर्वदा सर्वत्र कार्योत्पत्तिः स्यात् ॥ ११५ ॥

एतदेवाह।

**सर्वत्र सर्वदा सर्वासम्भवात् ॥ ११६ ॥**

व्याख्यातम् ॥ ११६ ॥

ननु उपादानकारणत्वाविशेषेऽपि यस्य यत् शक्यं तदेव तत् करोति। नहि तन्तुर्घटस्य कारणं भवति। कुत एव सम्बन्ध इत्यत आह।

**शक्तस्य शक्यकरणात् ॥ ११७ ॥**

असतस्य शक्तिः शक्यविषया वा न वा। शक्यविषया चेत्, शक्यस्य सत्त्वं वाच्यम्। नेति पक्षे तन्तुतो घटोत्पत्तिस्तदवस्था॥ ११७॥

अपरं न्यायमाह॥

## कारणभावाच्च॥ ११८॥

कार्य्यकारणयोरेकत्वात्। घटाकारेण परिणतोऽपि मृद्रूपता न जहाति। न च सदसतोरेकत्वम्॥ यदि द्वयोरेकत्वं, मृत्पिण्डेनापि जलाहरणं कर्त्तव्यम्। भवेदेव, यदि अत्यन्ताभेदः स्यात्, भेदाभेदपक्षे तु न कश्चिद्दोष इति। तथा च।

असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥
नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥ ११८॥

आह्वते॥

## भावे भावयोगश्चेन्न वाच्यम्॥ ११९॥

यदि भावे कारणे भावस्य कार्यस्य विद्यमानस्य योग उत्पत्तिः, तदा 'भविष्यति घटः, उत्पद्यते, नष्टः' इति व्यपदेशो न स्यात्॥ ११९॥

सिद्धान्तमाह॥

## न, अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ॥ १२०॥

यथा शुक्लपटस्य मलिनस्य क्षालनादिना शुक्लत्वमभिव्यज्यते, तथा कुलालव्यापारात् घटोऽभिव्यज्यते, मुद्गराभिघातात् तिरोभूयते। दृष्टश्च, अभिव्यक्तिः पीडनेन तिलेषु

येति, तर्हि अभिव्यक्तेरपि अभिव्यक्तिरूपत्वात् किमभिव्यक्त्यन्तरकल्पनयेति तुल्यम्। तत्र यस्तव सिद्धान्तः सोऽस्माकमपि ॥ १२३ ॥

प्रकृतिकार्य्याणामन्योऽन्यं साधर्म्यमाह ॥

**हेतुमदनित्यं सक्रियमनेकमाश्रितं लिङ्गम् ॥ १२४ ॥**

हेतुमत् कारणवत्। अनित्यं विनाशि। सक्रियं उपात्तं देहं त्यजत् पृथिवी शरीरादयश्च स्पन्दन्ते। अनेकं पुरुषभेदात्। आश्रितं स्वकारणे। लिङ्गं स्वकारणे लयं गच्छतीति ॥

यदि पञ्चविंशतितत्त्वं, किं ज्ञानसुखादीनां सामान्यकर्मणामभाव एव। तथा च दृष्टपरित्याग इत्यत आह ॥१२४॥

**आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५ ॥**

आञ्जस्यात् स्वरूपतः चतुर्विंशतितत्त्वात् अभेदस्तल्लक्षणयोगात् गुणसामान्यादीनाम्। तत्सिद्धिः तेषु एवान्तर्भावात्सिद्धिः। वाशब्दः पक्षान्तरं सूचयति। 'प्रधानव्यपदेशाद्वा' गुणादीनां पारम्पर्य्येण प्रधानकार्य्यत्वेन कार्य्यकारणयोरभेदात् प्रधानव्यपदेशादेव गुणादिसिद्धिः। न तु अभावात् अननुकीर्त्तनम् ॥१२५॥

प्रकृतिकार्य्ययोः साधर्म्यमाह ॥

**त्रिगुणाचेतनत्वादि द्वयोः ॥ १२६॥**

त्रिगुणमचेतनम्। आदिशब्दात् परार्थत्वम्। द्वयोरिति कार्य्यकारणयोः ॥१२६॥

प्रकृतिभागस्य त्रिगुणस्यान्योऽन्यवैधर्म्यमाह ॥

प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम् ॥ १२७ ॥

प्रीतिः सुखम्। आदिशब्दात् लघु प्रकाशकं सत्त्वम्। अप्रीतिः दुःखम्। आदिशब्दात् उपष्टम्भकं चलं रजः। विषादो मोहः। आदिशब्दात् गुरु वरणकं तमः ॥ १२७ ॥

तथा वैधर्म्यवचनावसरे साधर्म्यमाह ।

लघ्वादिधर्मैरन्योऽन्यं साधर्म्यं वैधर्म्यं गुणानाम् ॥ १२८ ॥

लघुत्वगुरुत्वे। अनेन वैधर्म्यमुक्तम्। आदिशब्दात् साधर्म्यं सूचितं तच्च पुरुषार्थत्वमन्योऽन्याभिभवजननमिथुनवृत्तित्वम् ॥ १२८ ॥

हेतुमत्त्वादिना महदादीनां कार्यत्वमुक्तम्। तत्र प्रमाणमाह ॥

उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत् ॥ १२९ ॥

प्रकृतिपुरुषयोर्भिन्नयोरन्यत्वात्। शेषं स्पष्टम् ॥ १२९ ॥

हेत्वन्तरमाह ॥

परिमाणात् ॥ १३० ॥

परिमितत्वात् ॥ १३० ॥

अपरां युक्तिमाह ॥

समन्वयात् ॥ १३१ ॥

प्रधानेन सह सम्यगन्वयात् प्रधानगुणानां सर्वपदार्थेषु दर्शनात् ॥ १३१ ॥

एतदेवाह ॥

शक्तितश्चेति ॥ १३२ ॥

कारणशक्त्या कार्य्यं प्रवर्त्तते इति महदादयः क्षीणाः सन्तः प्रकृत्यनुपूरणेन कार्य्यं जनयन्ति। अन्यथा प्रवृत्तिशीलत्वात् सर्वदा कार्य्यं जनयेयुः ॥ १३२ ॥

व्यतिरेकम् आह ॥

तद्धाने प्रकृतिः पुरुषो वा ॥ १३३ ॥

कार्य्यम् अकार्य्यञ्च कोटिद्वयम्। दर्य्यताहाने प्रकृतौ पुरुषे वा महदादीना प्रवेशः इति ॥ १३३ ॥

उभयकोटिविनिर्मुक्ताः एव महदादय भविष्यन्ति इत्यतः आह ॥

तयोरन्यत्वे तुच्छत्वम् ॥ १३४ ॥

तयोः कार्य्याकार्य्ययोः अन्यत्वे महदादीना तुच्छरूपत्वं अभावरूपत्वम् ॥ १३४ ॥

किमर्थं महदादय कार्य्यत्वेन प्रकृतेः लिङ्गम्। अविनाभावात् एव लिङ्ग भविष्यन्ति इत्यतः आह ॥

कार्य्यात् कारणानुमानं तत्साहित्यात् ॥१३५॥

भवति एव, यत्र कारणरूप कार्य्ये न दृश्यते, यथा चन्द्रोदयात् समुद्रवृद्ध्यनुमानम्। अत्र तु प्रधानरूपस्य महदादौ दर्शनात् कार्य्यात् कारणानुमानम् एव। तत्साहित्यात् प्रकृतिरूपस्य महदादौ दर्शनात् ॥ १३५ ॥

एवञ्च महत्तत्त्वम् एव जगत्कारणम् अस्तु, किं प्रधानेन इत्यतः आह ॥

अव्यक्तं त्रिगुणाल्लिङ्गात् ॥ १३६ ॥

त्रिगुणात् लिङ्गात्, लय गच्छति इति, महत्तत्त्वात् प्रधा-

यत् सङ्घत तत् असङ्घतपरार्थम् । सङ्घतपरार्थत्वे अनवस्था स्यात् । सङ्घतत्वञ्च गुणानाम् अन्योऽन्यमिथुनभावेन कार्य्यकारणम् । अथवा द्रवकठिनता सङ्घतत्वम् । तत् च प्रकृत्यादौ तिरोभूतम् अस्ति, अन्यथा तत्कार्य्येषु सङ्घतता अदर्शनप्रसङ्गात् ॥ १४० ॥

एतत् एव स्पष्टयति ॥

**त्रिगुणादिविपर्य्ययात् ॥ १४१ ॥**

पुरुषे त्रिगुणादिविपर्य्ययात् तददर्शनात् । आदिशब्दात् अन्येषां प्रकृतिधर्माणाम् अपि अदर्शनात् इति ॥ १४१ ॥

न्यायान्तरम् आह ॥

**अधिष्ठानाच्चेति ॥ १४२ ॥**

चेतन हि अधिष्ठाता भवति प्रकृतिश्च जडा इत्यर्थः ॥१४२॥

युक्त्यन्तरम् आह ॥

**भोक्तृभावात् ॥ १४३ ॥**

भोग्या प्रकृति, भोक्ता पुरुष । यद्यपि कूटस्थत्वात् आत्मन भोक्तृत्वं न अस्ति, तथापि बुद्धिच्छायापत्त्या इति उक्तम् ॥ १४३ ॥

मोक्षार्थं प्रवृत्तिः, सा किमात्मन प्रकृतेः वा इत्यतः आह ॥

**कैवल्यार्थं प्रवृत्तेः ॥ १४४ ॥**

त्रिगुणस्वभावत्वात् प्रकृते न स्वभावप्रच्यवः, अनित्यत्वप्रसङ्गात् च । यस्य औपाधिका गुणाः तस्य कैवल्यं सम्भवति । स च आत्मा इति ॥ १४४ ॥

स किंरूप इत्यत. आह ॥

**जड़प्रकाशायोगात्प्रकाशः ॥ १४५ ॥**

जड़ं न प्रकाशयते इति सिद्धम्। यदि आत्मा अपि जड़ः स्यात्, तर्हि अपि अन्येन प्रकाशेन भवितव्यम्। लाघवात् च आत्मा एव प्रकाशरूपः अस्तु। श्रुतिश्च 'येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयात्' इति जड़ं अपि आत्मा अस्तु चिद्धर्मा। तेन जगत् प्रकाशयति॥१४५॥

ननु चिद्रूप इत्यत आह।

## निर्गुणत्वान्न चिद्धर्मा ॥ १४६ ॥

यदि आत्मनः धर्मयोगः स्यात्, परिणामित्वं स्यात् तत् च अनिर्मोक्ष इति॥१४६॥

अत्र श्रुतिविरोधम् आह।

## श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् ॥ १४७ ॥

'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतिः। गुणयोगे सा बाधिता स्यात्॥१४७॥

दूषणान्तरम् आह।

## सुषुप्त्याद्यसाक्षित्वम् ॥ १४८ ॥

यदि आत्मा जड़ः स्यात् सुषुप्त्यादौ असाक्षित्वं अप्रमाणं स्यात्। न च एवं सुखम् अहम् अस्वाप्सम् इति प्रतिसन्धानात्। आदिशब्दात् जाग्रत्स्वप्नम्।

एक एव आत्मा इति वेदान्तिनः। तथा च

नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते भ्रान्त्या मायया न स्वरूपतः॥१४८॥

अत्र आह।

जन्मादिव्यवस्थात: पुरुषबहुत्वम् ॥ १४९ ॥

यदि एक आत्मा, एकस्मिन् जायमाने सर्वे जायेरन् ॥१४९॥

परमतम् आशङ्कते ॥

उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभि: ॥ १५० ॥

यथा एकम् आकाश, घटाद्युपाधिभेदात् घटे नष्टे 'घटाकाश नष्टम्' इति व्यपदिश्यते, तथा एकात्मपक्षे अपि देहावच्छेदात् तन्नाशे 'आत्मा नष्ट' इति व्यपदेशमात्रम्। नानात्मपक्षे अपि अन्यथा आत्मन: नित्यत्वात् कथ जन्ममरणव्यवस्था इति ॥ १५० ॥

समाधानम् आह ॥

उपाधिर्भिद्यते, न तु तद्वान् ॥ १५१ ॥

उपाधि' भिद्यते। न च अन्यनाशात् अन्यत्र नाशव्यवहार अतिप्रसङ्गात्। एकात्मपक्षे च व्यक्त एव विरुद्धधर्माध्यास, एकस्य बन्धमोक्षाभावात्। आकाशस्य तु धूमादियोगायोगौ अविरुद्धौ, संयोगस्य अव्याप्यवृत्तित्वात् ॥ १५१ ॥

एतेन किं स्यात् इत्यत आह ॥

एवमेकत्वेन परिवर्त्तमानस्य न विरुद्धधर्माध्यास. ॥ १५२॥

न विरुद्धधर्माध्यास भवति ॥ १५२ ॥

'अन्यधर्मस्य अपि अन्यत्र आरोप. दृष्ट', यथा प्रकृते, कर्तृत्व पुरुषे अन्यत्र इत्यत आह ।

अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात् ॥ १५३ ॥

पुरुषधर्मत्वेन भ्रान्तौ अत्र पुरुषाकर्तृत्वस्य अन्यत्वात् आरोपस्य असत्त्वात् । न च सत्यासत्ययोः सम्बन्धः तात्त्विकः भवति । असङ्गित्वात् आत्मनः न बन्धमोक्षादि सम्भवति ।

एवं च श्रुतिविरोधः स्यात् । तथा च 'एकमेवाद्वितीयं ब्रह्म' ।

'नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति । य इह नानेव पश्यति' ॥ १५३ ॥

अत आह ।

नाद्वैतश्रुतिविरोधो जातिपरत्वात् ॥ १५४ ॥

स्पष्टम् ॥ १५४ ॥

ननु अनेकात्मवादिनः अपि एकस्य आत्मनः बन्धमोक्षौ विरुद्धौ इत्यत आह ।

विदितबन्धकारणस्य दृष्ट्या तद्रूपम् ॥ १५५ ॥

विदितं बन्धकारणं प्रकृतिपुरुषविवेकादर्शनं येन तस्य दृष्ट्या विवेकज्ञानेन तद्रूपं कैवल्यरूपम् ॥ १५५ ॥

विवेकादर्शननिमित्तः बन्धः न तात्त्विकः । तस्मात् तद्दर्शने निवर्तते इति युक्तिः । एवं च एकात्मपक्षे एव व्याघ्रे पक्षाभासः, न नानात्मपक्षे इत्यत आह ।

नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ॥ १५६ ॥

अन्धः न पश्यति इति चक्षुष्मान् अपि किं न उपलभते । नानात्मवादिनाम् अपि एके व्यापाराः सन्ति इत्यर्थः ॥ १५६ ॥

इतः अपि नानात्मानः इत्याह ।

**वामदेवादिर्मुक्तः, नाद्वैतम् ॥ १५७ ॥**

पुराणादौ श्रुत 'वामदेव' मुक्त. शुक. मुक्तः' इत्यादि । यदि एक एव आत्मा, एकमुक्तौ सर्वमुक्तेः भेदश्रुतिबाधः स्यात् ॥ १५७ ॥

नानात्मपक्षे अनादौ संसारे कदापि कः अपि मुच्यते इति क्रमेण सर्वमुक्तौ सर्वशून्यता स्यात्, एकात्मपक्षे तु उपाधिविगम' एव मोक्ष इत्यतः आह ॥

**अनादावद्य यावदभावाद्भविष्यदप्येवम् ॥१५८॥**

अनादौ संसारे अद्य यावत् शून्यताया अदर्शनात् भविष्यति मुक्ति' इति पक्षे न अस्ति प्रमाणम् ॥ १५८ ॥

समाधानान्तरम् आह ॥

**इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥**

अनन्तत्वात् आत्मना क्रमेण मुक्तिः अपि स्यात्, संसारोच्छेद अपि न स्यात् । इदानीम् इव सर्वत्र भविष्यत्काले अपि मुक्ति भविष्यति इति न अत्यन्तोच्छेद. स्यात्, प्रवाह नित्यत्वात् ॥ उपाधिविगम' मोक्ष इति पक्षे अपि सर्वशून्यताप्रसङ्ग' इति तुल्य. अनुयोग' । यथा नानात्मना क्रमेण मुक्तौ सर्वोच्छेद, तथा सर्वकर्मोच्छेदे सर्वोपाधिनाशात् जगत् शून्य स्यात् । अथ उपाधीनाम् अनन्तत्वात् न शून्यता, नानात्मपक्षे अपि तुल्यत्वम् । तथा च

अथ एव हि विद्वत्सु मुच्यमानेषु सन्ततम् ।
ब्रह्माण्डजीवलोकानामनन्तत्वादशून्यता ॥ १५९ ॥

किम् आत्मा बद्ध मुक्तः वा । बद्धत्वे स्वरूपस्य अप्रच्यवादनिर्मोक्ष, प्रच्यवे अनित्यत्वम् । मुक्तत्वे व्यर्थः ध्यानादि इत्यत. आह ॥

## अथ विषयनिरूपणानन्तरं प्रधानकार्य्यनिरूपणार्थं द्वितीयाध्यायारम्भः ॥

---

### विमुक्तविमोक्षार्थं स्वार्थं वा प्रधानस्य ॥१॥

स्वभावविमुक्तः आत्मा। तस्य अभिमानिकबन्धविमोक्षार्थं प्रधानस्य जगत्कर्त्तृत्वम्। दुःखसृष्टौ स्वभावात् एव वैराग्यात् मोक्षे वै पुरुषः प्रवर्त्तते। सुखसृष्टौ च दुःखशबलत्वात् सुखस्य अपि दुःखपक्षनिक्षेपात् वैराग्यम् एव उपजायते। तत् चतुर्विध, यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञा वशीकारसंज्ञा च इति। हेय दुःखम् अनागतम् एकविंशतिप्रकार, शरीर षडिन्द्रियाणि षड्विषयाः षड्बुद्धय सुख दुःख च इति। तत्र शरीरं दुःखायतनत्वात् दुःखं, इन्द्रियाणि विषया बुद्धय च तत्साधनभावात्, सुख दुःखानुषङ्गात्, दुःख यातनापीडासन्तापात्मक मुख्यतः एव इति। तस्य निर्वर्त्तकम् असाधारण कारणम् अविद्या तृष्णा धर्माधर्मौ इति। अविद्या विपरीतज्ञान तत्संस्कार च विद्वद्भिः उक्त तृष्णादीनाम् असाधारण हेतु। दुःखहान च दुःखोत्पत्तिनिवृत्ति आत्यन्तिकी। तस्य उपायः तत्त्वज्ञानम् आत्मविषय, ततः अविद्यायाः निवृत्तेः। तथा च उक्तं 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'

'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सतत ध्येय एते दर्शनहेतवः।' ॥

'तरति शोकमात्मवित्' इति। स द्विविधः परश्च अपरश्च इति। तथा च उक्तं 'द्वे ब्रह्मणी वेदितव्ये, पर चापरमेव च' इति। विद्यैश्वर्य्यविशिष्टः संसारधर्मैः ईषत् अपि असं-

यथा एकस्य बहवः भृत्याः आराधनापराधाभ्यां केचित् मुच्यन्ते केचित् प्रसादभाजः केचित् बध्यन्ते, तथा प्रकृतिः एका पुरुषाश्च बहवः इति। येषां स्पष्ट विवेकज्ञानं तेषां शीघ्रं, येषाम् उपासनासाध्यं तेषां क्रमेण, अन्येषां नास्ति एव ॥ ४ ॥

कूटस्थत्वात् आत्मनः बन्धः नास्ति एव इत्यत आह ॥

## प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥५॥

प्रकृतिः यं प्रति आत्मानं दर्शितवती तं प्रति प्रकृतेः अप्रदर्शनं मोक्षः । यं प्रति प्रवर्त्तते तं प्रति पुरुषः छायापत्तिः एव अध्यासः, न तात्त्विकः । तथा च

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः ।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥ ५ ॥

अत्र प्रमाणं दर्शयति ॥

## कार्य्यतस्तत्सिद्धिः ॥ ६ ॥

प्रकृतिकार्य्याणां महदादीनाम् अविच्छेददर्शनात् प्रकृतेः बन्धसिद्धिः ॥ ६ ॥

प्रकृतिः प्रवृत्तिस्वभावत्वात् सर्वपुरुषान् प्रवर्त्तयेत्, किं विवेकाविवेकदर्शनेन इत्यत आह ॥

## चेतनोद्देशान्नियमः कण्टकमोक्षवत् ॥७॥

यथा कण्टकं दृष्ट्वा कश्चित् कञ्चित् निषेधति 'अनेन वर्त्मना मा गाः' न सर्वान् प्रति, तथा अधिकारात् चेतनविशेषोद्देशात् प्रवर्त्तनं, न सर्वं प्रति इति नियमः ॥ ७ ॥

न आत्मनः बन्धः इत्युक्तम् । तत् आह ॥

## अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥ ८ ॥

अध्यवसायो बुद्धिः ॥ १३ ॥

एवम् एव इति निश्चयः अध्यवसाय. ॥ १३ ॥

धर्मादीना क्व अन्तर्भावः इत्यत्र आह ॥

तत्कार्य्यं धर्मादिः ॥ १४ ॥

धर्मज्ञानवैराग्यैश्वर्य्याणि । तत्कार्य्यत्वेन आत्मधर्मत्व निरस्तम् । कार्य्यकारणयोः अभेदात् अन्तर्भावः दर्शित. ॥१४॥

तस्या विशेषम् आह ॥

महदुपरागाद् विपरीतम् ॥ १५ ॥

अधर्माज्ञानावैराग्यानैश्वर्य्याणि । दृष्टः हि सहकारिभेदात् कार्य्यभेद । यथा वेत्रवीजस्य वेत्राङ्कुरजनकत्व, वह्निसयोगसहकारिण कदलीकाण्डजनकत्व, तथा सत्त्वसहकारिण महतः धर्मादिजनकत्व, तम सहकारिण अधर्मादिजनकत्वम् इति ॥ १५ ॥

क्रमप्राप्तम् अहङ्कारादिलक्षणम् आह ॥

अभिमानोऽहङ्कारः ॥ १६ ॥

अहम् इति अभिमान ॥ १६ ॥

तस्य कार्य्यम् आह ॥

एकादशपञ्चतन्मात्रं तत्कार्य्यम् ॥ १७ ॥

एकादश इन्द्रियाणि पञ्च तन्मात्राणि षोडशक तत्कार्य्यम् ॥ १७ ॥

कथम् एकस्मात् कारणात् जडप्रकाशौ भवत इत्यत्र आह ॥

सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारात् ॥ १८ ॥

एकम् इन्द्रियं, उपाधिभेदात् नानात्वम् इत्यत्र आह ॥

**शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥**

भवतु उपाधिभेदः, शक्तिभेद तु अवश्य वक्तव्य, सः च सत्य. इति नानात्वम् अपि सत्यम् ॥ २४ ॥

एकत्वेन एव उपपत्तौ बहुत्वकल्पना गुर्वी इत्यत्र आह ॥

**न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥**

स्पष्टम् ॥ २५ ॥

मनस' लक्षणम् आह ॥

**उभयात्मकं च मनः ॥ २६ ॥**

बुद्धीन्द्रियात्मक कर्मेन्द्रियात्मक मन., अधिष्ठानात् उभयप्रवृत्तेः ॥ २६ ॥

कथम् एकस्मात् अहङ्कारात् अनेकानि इन्द्रियाणि इत्यत आह ॥

**गुणपरिणामभेदान्नानात्वमवस्थावत् ॥२७॥**

धर्माधर्मसहकारिसत्त्वादिगुणपरिणामभेदात् अनेकानि। 'अवस्थावत्' इति यथा एकस्य देहस्य बाल्ययौवनवार्द्धकानि इति ॥ २७ ॥

उभयेन्द्रियविषयम् आह ॥

**रूपादिरसमलान्त उभयोः ॥ २८ ॥**

उभयोः बुद्धीन्द्रियकर्मेन्द्रिययो । बुद्धीन्द्रियस्य विषया रूपरसगन्धस्पर्शशब्दा । कर्मेन्द्रियस्य विषया वचनविहरणादानानन्दरसमला. । रसमल नाम मल, तदन्त' ॥ २८ ॥

आत्मेन्द्रिययो. वैधर्म्यम् आह ॥

प्रमाणानि। विपर्य्ययः मिथ्याज्ञानम् अतद्रूपप्रतिष्ठम्। विकल्पः उभयस्पृक् ज्ञानम्। निद्रा तमोऽवलम्बि ज्ञानम्। स्मृतिः अतीतज्ञानम्॥ क्लिष्टाः क्लेशयुक्ताः रजस्तमोमय्यः। अक्लिष्टाः सत्त्वमय्यः दग्धक्लेशाः॥ ३३॥

वृत्तिनिवृत्तौ मुक्तिः इति आह॥

## तन्निवृत्तावुपशान्तोपरागः स्वस्थः॥ ३४॥

वृत्तिनिवृत्तौ क्षपिताविद्यास्मितारागद्वेषाभिनिवेशः स्वस्थः स्वरूपं लभते॥ ३४॥

दृष्टान्तम् आह॥

## कुसुमवच्च मणिः॥ ३५॥

यथा जपाकुसुमसंसर्गात् स्फटिके लौहित्यं, तदपगमात् स्फटिकः स्वरूपेण अवतिष्ठते, तथा सः अपि इति॥ ३५॥

करणानां तुल्यत्वात् सर्वदा तुल्यरूपता इत्यत्र आह॥

## पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात्॥३६॥

न तुल्यता, करणोद्भवानुद्भवाभ्यां विशेषात्। विशेषश्च अदृष्टोल्लासात् बलवत्तरत्वात्॥ ३६॥

दृष्टान्तम् आह॥

## धेनुवद्वत्साय॥ ३७॥

यथा धेनुत्वेन तुल्यत्वे अपि या क्षीरिणी सा वत्सं पुष्णाति॥ ३७॥

बाह्यान्तरभेदात् कति करणानि इत्यत्र आह॥

## करणं त्रयोदशविधमवान्तरभेदात्॥ ३८॥

अन्तर्बुद्ध्यहङ्कारमनांसि। बाह्यानि दशेन्द्रियाणि॥३८॥

इन्द्रियेषु कथं करणत्वम् इत्यत्र आह॥

इन्द्रियेषु साधकतमत्वयोगात् कुठारवत् ॥ ३९ ॥

यथा साधकतमत्वेन कुठारे करणत्वं तथा इन्द्रियेषु अपि इति । ३९ ।

त्रयोदशकरणानां प्राधान्यम् आह ।

द्वयोः प्रधानं मनो लोकवद् भृत्यवर्गेषु ॥ ४० ॥

द्वयोः बुद्धीन्द्रियकर्मेन्द्रिययोः प्रधानं मनः, तदधिष्ठानाद् एव एषां प्रवृत्तेः यथा लोके भृत्येषु स्वामी । ४० ।

युक्तिम् आह ।

अव्यभिचारात् ॥ ४१ ॥

स्पष्टम् । ४१ ।

युक्त्यन्तरम् आह ।

तथाशेषसंस्काराधारत्वात् ॥ ४२ ॥

नष्टेन्द्रियाणाम् अपि संस्कारदर्शनात् । ४२ ।

न्यायम् आह ।

स्मृत्यानुमानाच्च ॥ ४३ ॥

इन्द्रियं विना अपि स्मृतिदर्शनात् मनः अनुमीयते ।४३।

आत्माधारः संस्कारः इत्यत आह ।

सम्भवेन्न स्वतः ॥ ४४ ॥

स्वतः आत्मनः न सम्भवेत् कूटस्थनित्यत्वात् । ४४ ।

करणत्वे तुल्ये विनिगमकम् गुणप्रधानभावे इत्यत आह ।

आपेक्षिको गुणप्रधानभावः, क्रियाविशेषात् ॥ ४५ ॥

स्पष्टम् ॥ ४५ ॥

निरभिमन्यमानात् न अपरः परार्थं प्रवर्त्तते इत्यत्र आह ॥

**तत्कर्मार्जितत्वात्तदर्थमभिचेष्टा लोकवत् ॥४६॥**

बुद्धिप्रतिविम्बितपुरुषकर्मार्जितत्वात् पुरुषार्थम् अभिचेष्टा प्रवर्त्तन बुद्ध्यादीनाम् । यथा लोके येन अर्जित भृत्य तत्कर्म करोति ॥ ४६ ॥

सर्वत्र बुद्धेः प्राधान्यम् इति आह ॥

**समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥ ४७ ॥**

यथा लोके ग्रामाध्यक्षात् राज्याध्यक्ष श्रेष्ठ, तस्मात् अपि राजा इति, तथा मन बुद्ध्यर्थं प्रवर्त्तते इति सर्वप्रधाना बुद्धि इति । समानकर्मयोगे पुरुषार्थतुल्यक्रियायोगे अपि सर्वेषाम् इति ॥ लोकवत् इति वीप्सा अध्यायपरिसमाप्तौ ॥ ४७ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तौ
प्रधानकार्य्याध्यायो द्वितीय ॥

---

प्रधानकार्य्यनिरूपणानन्तरं वैराग्यार्थं
तृतीयाध्यायारम्भः ॥

**अविशेषाद्‌ विशेषारम्भः ॥ १ ॥**

अविशेषात् भूतसूक्ष्मात् विशेषस्य महाभूतस्य आरम्भ ॥१

**तस्माच्छरीरस्य ॥ २ ॥**

तस्य मांसादिमयविचारात् निर्विद्यते ॥ २ ॥

उत्पत्ति दर्शिता, नाश, कुत्र इत्यत्र, आह ॥

द्वयोः देहयो कस्य भोगः इत्यत्र आह ॥

## पूर्वोत्पत्तेस्तत्कार्य्यत्वं भोगादेकस्य नेतरस्य ॥ ८ ॥

पूर्वोत्पत्तेः सूक्ष्मशरीरस्य। भोगात् एकस्य तस्य, न इतरस्य स्थूलस्य, तत्कार्य्यत्वम्। स्थूलशरीरस्य गौणः भोग, मृतशरीरे भोगादर्शनात् ॥ ८ ॥

कतिभिः तत्त्वै सूक्ष्मशरीरारम्भः इत्यत्र आह ॥

## सप्तदशैकं लिङ्गम् ॥ ९ ॥

सप्तदश च एक च अष्टादश। तैः लिङ्ग सूक्ष्मदेह, उत्पद्यते। बुद्धग्रहङ्कारमनांसि पञ्च सूक्ष्मभूतानि दश इन्द्रियाणि इति ॥ ९ ॥

सूक्ष्मदेहस्य सर्वत्र तुल्यत्वात् कथ पुत्तिकाहस्तिदेहाना विसदृशाना तस्मात् उत्पत्ति इत्यत्र आह ॥

## व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥

व्यक्तम् ॥ १० ॥

यदि आत्मा अन्य, कथ देहे अहम् इति अभिमान इत्यत्र आह ॥

## तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः ॥ ११ ॥

आत्माधिष्ठानाश्रये देहे सम्भोगात् आत्मवादात् देहे अहम् इति अभिमानवादः ॥ ११ ॥

अत्र दृष्टान्तम् आह ॥

## न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च ॥१२॥

यदि आत्मना विना देहे अहम् इति प्रत्यय, तदा मृतदेहे अहम् इति प्रत्ययः स्यात्। न च एवम्। यथा आवर-

विप विना न छाया, भित्तिं विना न चित्रं, तथा पञ्च वदि ॥ १२ ॥

सूक्ष्मदेह एव आत्मा भविष्यतीति इत्यत आह ॥

मूर्त्तत्वेऽपि न, सङ्घातयोगात् तरणिवत् ॥ १३ ॥

सङ्घातत्वात् मूर्त्तत्वात् परार्थः । 'तरणिवत्' इति यथा प्रकाशत्वे अपि मूर्त्तत्वात् न आदित्यस्य आत्मत्वम् ॥ १३ ॥

मन आत्मा भविष्यति इत्यत आह ।

अणुपरिमाणं तत्कृतिश्रुतेः ॥ १४ ॥

मनः अणुपरिमाणं तत्क्रियायां श्रुतिदर्शनात् । अपि च नित्यत्वे न इन्द्रियत्वम् इति उपाधिः वक्तव्यः । यदि कणपरिमाणवत् नित्यतापत्त्या उपाधिर्न तदा तावन्मात्र वृत्तित्वम् न अन्यत्र इति योजनत् प्रसज्येत । ततश्च देह-मात्रम् उपाधिः वक्तव्यः । तथा च तदवच्छेदेन वृत्तित्वे 'शिरसि मे वेदना' 'पादे मे सुखम्' इति अव्याप्यवृत्तित्व-प्रतीतिविरोधः । युगपज्ज्ञानानुत्पत्ते अपि मनसः अणुत्वम् आह । न्यायेन अन्यत्र प्रपञ्चित इति ॥ १४ ॥

हेत्वन्तरम् आह ।

तदन्नमयत्वश्रुतेः ॥ १५ ॥

तस्य मनसः अन्नमयत्वे श्रुतिः अस्ति । अन्नमयत्वेन च सौम्यत्व दर्शितम् । सौम्यत्वं च अन्नरूपत्वम् इति । न च आत्मा अन्नम् । श्रुतिश्च अन्नं मे प्राणाः । प्राणश्च अन्नमय एव । अन्नमयमनसः ज्ञातः तस्मात् अपि मनः न आत्मा इति ॥ १५ ॥

पुरुषार्थं महदादीनां प्रवृत्तिः संसृति विमर्शम् इत्यत आह ।

पुरुषार्थं संसृतिलिङ्गानां सूपकारवद्राज्ञः

॥ १६ ॥

यथा प्रवृत्तिः तथा संसृतिः। संसृतौ च मरणदुःखम् इति निर्विक्षः भवति। 'सूपकारवत्' इति परार्थम् एव प्रवृत्तिः ॥ १६ ॥

विप्रतिपत्तौ सत्यां स्वपक्षम् आह ॥

पाञ्चभौतिको देहः ॥ १७ ॥

स्पष्टम् ॥ १७ ॥

का विप्रतिपत्तिः इत्यत्र आह ॥

चातुर्भौतिकमित्यन्ये ॥ १८ ॥

आकाशपरित्यागेन चातुर्भौतिकं शरीरम् इति अन्ये ॥ १८॥

मतान्तरम् आह ॥

ऐकभौतिकमपरे ॥ १९ ॥

पार्थिवं शरीरम् इति ॥ १९ ॥

देहचैतन्यं निरस्यति ॥

न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥ २० ॥

पृथक्पृथक्भूतेषु चैतन्यादर्शनात् न स्वभावचैतन्यम्। अतएव मिलितानां च चैतन्यं न आशङ्कनीयम्। जन्तवः हि प्रत्येकं क्षुद्रजन्तुसंयमनशक्तिमन्तः मिलिताः ते हस्तिनम् अपि संयमयन्ति, न च एवं भूतानि इति। न देहचैतन्यम् ॥ २० ॥

दूषणान्तरम् आह ॥

प्रपञ्चत्वाद्यभावश्च ॥ २१ ॥

देहस्य चेतनत्वे प्रपञ्चस्य मरणस्य अभावः, चेतनस्य नित्यत्वात् । अत्र चेतनस्य अपि मरणं मुक्तिः इति ॥ २१ ॥

दूषणान्तरम् आह ।

**मदशक्तिवच्चेत्, प्रत्येकपरिदृष्टे सौक्ष्म्यात् सांहत्ये तदुद्भवः ॥ २२ ॥**

यथा मदशक्तिः प्रतिद्रव्ये सूक्ष्मत्वेन स्थिता सांहत्ये मदजनकत्वात् उपलभ्यमाना अपि भवति । न च भूतेषु अपि प्रत्येकं सूक्ष्मचैतन्यं दृष्टं येन सांहत्ये देहे चैतन्यं स्यात् । न सांसिद्धिकम् इति सूत्रे निषिद्धं निषेधमुखेन दर्शितं भवति अत्र सूत्रे विधिमुखेन इति न पुनः उक्तम् ॥ २२ ॥

वैराग्यादीनां पारम्पर्येण मुक्तिसाधनत्वम् उक्तम् । साक्षात् मुक्तिसाधनम् आह ।

**ज्ञानान्मुक्तिः ॥ २३ ॥**

स्पष्टम् । २३ ।

व्यतिरेकम् आह ।

**बन्धो विपर्ययात् ॥ २४ ॥**

अज्ञानात् । २४ ।

न ज्ञानमात्रात् मुक्तिः, कर्मणः अपि मुक्तिसाधनत्वात् । तथा च श्रुतिः 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति । तत्र आह ।

**नियतकारणत्वान्न समुच्चयविकल्पौ ॥ २५ ॥**

नियतम् एव कारणम् । ज्ञानात् मुक्तिः, कर्मणः भुक्तिः । यत्र अपि ज्ञानकर्मणोः समुच्चयं ब्रूते तत्र अपि ज्ञानार्थम् अस्मात् न समुच्चयः । न अपि कदाचित् ज्ञानात् कदाचित् कर्मणः इति विकल्पः । श्रुतिश्च

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥२५॥

दूषणान्तरम् आह॥

स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य॥ २६॥

मायिकः स्वप्नः, अमायिकः जागरः। स्वप्नवत् कर्म, जागरवत् ज्ञानम्। तुल्यकालयोः हि समुच्चयः, न तु स्वप्नजागरयोः तुल्यकालत्वं, तस्मात् न ज्ञानकर्मसमुच्चयः॥ २६॥

प्रत्ययत्वात् स्वप्नप्रत्ययवत् जागरप्रत्ययस्य अपि मिथ्यात्वम् इत्यत आह॥

इतरस्यापि नात्यन्तिकम्॥ २७॥

स्वप्नप्रत्ययस्य अपि न आत्यन्तिकं मिथ्यात्वं, खपुष्पवत्, न च स्वात्मनि अपि मिथ्यात्वं, अन्यथा स्वप्नः इत्येव न स्यात्। न च अत्यन्तादृष्टे स्वप्नः, किन्तु जाग्रद्दृष्टे अर्थे॥ २७॥

दृष्टकारणाभावात् सङ्कल्पमात्रेण योगिनां न सर्वा सिद्धिः इत्यत आह॥

सङ्कल्पितेऽप्येवम्॥ २८॥

न अस्मदादीनां सङ्कल्पात् सिद्धिः इति योगजधर्मोपगृहीतानां सिद्धानाम् अपि न भवितव्यम्। तस्मात् न मिथ्या इति॥ २८॥

एतत् एव आह॥

भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत्॥२९॥

यथा महदादीनां पूर्वम् अपेक्ष्य कार्य्यकरणं, प्रकृतेस्तु न

कार्यकरत्वे यस्य अपि अपेक्षा तथा सहकारणाभावात् अपि योगिनां भावनोपचयात् सर्वं सम्पद्यते ॥ २९ ॥

भावनार्थं ध्यानम् आह ॥

रागोपहतिर्ध्यानम् ॥ ३० ॥

रागात् रजोगुणात् चलितस्य तदुपहतिः निश्चलितस्य ध्यानम् ॥ ३० ॥

तत्सिद्धिः कथम् स्यात् आह ।

वृत्तिनिरोधात् तत्सिद्धिः ॥ ३१ ॥

वृत्तयः प्रमाणादयः पञ्च तन्निरोधात् तत्सिद्धिः ध्यानसिद्धिः ॥ ३१ ॥

तन्निरोधः कथम् स्यात् आह ।

धारणासनस्वकर्मणा तत्सिद्धिः ॥ ३२ ॥

धारणा नाभ्यादिदेशे चित्तधारणम् । आसनं स्वस्तिकादि । स्वकर्म यमनियमप्राणायामप्रत्याहाराः उपलक्षिताः । अथवा स्वजातिविहितकर्मानुष्ठानम् । इति वृत्तिनिरोधसिद्धिः ॥ ३२ ॥

नानासनेषु सम्मतम् आसनम् आह ॥

स्थिरसुखमासनम् ॥ ३३ ॥

येन स्थैर्यं सुखं च स्यात् तदासनम् अनुष्ठेयम् ॥ ३३ ॥

अथ निरोधोपायम् आह ।

निरोधश्छर्दिविधारणाभ्याम् ॥ ३४ ॥

छर्दिः रेचनम् । विधारणं कुम्भकम् । उपलक्षणम् एतत् । पूरकः अपि द्रष्टव्यः ॥ ३४ ॥

किं तत् स्वकर्म स्यात् आह ।

स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥३५॥

स्पष्टम् ॥ ३५ ॥

अन्य वृत्तिनिरोधोपायम् आह ॥

वैराग्यादभ्यासाच्च ॥ ३६ ॥

वैराग्यात् द्विविधात्, अपरात् अलम् इति प्रत्ययात्, परात् ज्ञानप्रसादमात्रात्। अभ्यासात् पौनःपुन्येन ध्यानात्। चः समुच्चये ॥ ३६ ॥

वृत्तीनाम् अवान्तरभेदम् आह ॥

विपर्य्ययभेदाः पञ्च ॥ ३७ ॥

अविद्या मिथ्याज्ञान, अस्मिता अभिमानः, राग' अनुराग, द्वेषः क्रोधः, अभिनिवेश त्रासः इति विपर्येण विषयि ज्ञानम् उपलक्षितम् ॥ ३७ ॥

अशक्तिम् आह ॥

अशक्तिरष्टाविंशतिधा ॥ ३८ ॥

तुष्टिम् आह ॥

तुष्टिर्नवधा ॥ ३९ ॥

सिद्धिम् आह ॥

सिद्धिरष्टधा ॥ ४० ॥

चतुर्षु विपर्य्ययभेदम् आह ॥

अवान्तरभेदाः पूर्ववत् ॥ ४१ ॥

पूर्ववत् इति पूर्वाचार्य्यैः उक्ता' । द्वाषष्टि' विपर्य्ययभेदा । प्रकृतिमहदहङ्कारपञ्चतन्मात्रेषु आत्मबुद्धिः अविद्या तमः अष्टविषयत्वात् अष्टधा। देवाः हि अणिमादिकम् आत्मीयत्वेन अभिमन्यन्ते, सा इयम् अस्मिता मोहः अष्टविषयत्वात् अष्टधा।

शब्दादिषु तथाष्टेषु पञ्चसु दिव्यादिव्यतया दश महामोहो दशविषयत्वात् दशधा। शब्दादयो दश अणिमाद्यष्टैश्वर्यो पायेन अर्जिताः ते च अन्येन उपहन्यमाना इति ता-मिस्रः अष्टादशविषयत्वात् अष्टादशधा। देवा हि एतान् उपभुञ्जाना असुरैः उपहन्यन्ते इति अभिनिवेशः त्रासः अन्ध-तामिस्रः अष्टादशविषयत्वात् अष्टादशधा। एवं द्वाषष्टि-रिति ॥ ४१ ॥

अशक्तिभेदान् आह ।

एवमितरस्याः ॥ ४२ ॥

इतरस्या अशक्तेः एवं कर्मभेदा अष्टाविंशतिधा। एका-दश इन्द्रियवधाः

बाधिर्यं कुणितान्धत्वं जडताजिघ्रता तथा।
मूकताकौण्यपङ्गुत्वक्लैब्योदावर्तमुग्धता ।

एतद्विधया एकादश बुद्धेः। नव तुष्टयः अष्ट सिद्धयः तद्विपर्ययेण सप्तदश बुद्धेः। एवम् अष्टाविंशतिः इति ॥४२॥

तुष्टिभेदान् आह ।

आध्यात्मिकादिभेदान्नवधा तुष्टिः ॥ ४३ ॥

अनात्मनि आत्मबुद्ध्या प्रवर्त्तमानाः आध्यात्मिकाः चतस्रः। आदिशब्दात् बाह्याः पञ्च। प्रकृतिविवेकदर्शनात् चेत् मुक्तिः सा एव उपायः क्रियावता इति प्रकृत्याख्या प्रथमा तुष्टिः अम्भ इति उच्यते। विवेकज्ञानात् अपि न साक्षात् प्रव्रजनात् अतएवचात् अविद्याति इति उपादानाख्या द्वितीया तुष्टिः सलिलम् उच्यते। कालात् अपि न साक्षात् किन्तु भाग्यात् अपवर्ग इति कालाख्या तृतीया तुष्टिः ओघ इति उच्यते। भाग्यमात् अपि न अदेवात् मुक्तिः, किन्तु भाग्यात्

एव इति भाग्याख्या चतुर्थी तुष्टि' वृष्टिः इति उच्यते। आत्मानम् अधिकृत्य इति आध्यात्मिकाः॥ पञ्चधा विषयोपरमात् बाह्याः पञ्च। विषयार्जनदुःखात् उपरमे एका तुष्टिः पारम् उच्यते। रक्षणदुःखात् उपरमे द्वितीया तुष्टि, सुपारम् उच्यते। क्षयं भावयतः दुःखात् उपरमे तृतीया तुष्टिः पारपारम् उच्यते। भोगदोषं भावयत दुःखात् उपरमे चतुर्थी तुष्टि अनुत्तमाम्भ, उच्यते। न अनुपहत्य भूतानि भोगसिद्धिः इति दुःखात् उपरमे पञ्चमी तुष्टि उत्तमाम्भः उच्यते॥ एव नवधा इति॥ ४३॥

सिद्धे' भेदान् आह॥

## ऊहादिभिः सिद्धिरष्टधा॥ ४४॥

ऊह तर्क' मननम् इति एका सिद्धिः तारम् उच्यते। शब्दज्ञान द्वितीया सिद्धिः सुतारम् उच्यते। अध्ययन तृतीया सिद्धि तारतारम् उच्यते। गुरुब्रह्मचारिणा प्राप्ति' चतुर्थी सिद्धि रम्यकम् उच्यते। बाह्यान्त'शुद्धि पञ्चमी सिद्धि सदामुदितम् उच्यते। आध्यात्मिकदुःखविघात, षष्ठी सिद्धिः प्रमोदम् उच्यते। आधिभौतिकदुःखविघात सप्तमी सिद्धिः सुदितम् उच्यते। आधिदैविकदुःखविघातः अष्टमी सिद्धि मोदमानम् उच्यते। एवम् अष्टधा इति॥ प्राधान्येन विपर्य्ययाशक्तितुष्टिसिद्धि इति चतुःप्रकारा अवान्तरभेदात् पञ्चाशत्॥ ४४॥

उत्तरेण पूर्वपरित्यागात् सिद्धि इति आह॥

## नेतरादितरहानेन विना॥ ४५॥

इतरात् अशक्तित, इतरहानेन विपर्य्ययहानेन विना न

विशाला उद्रिक्ता ॥ ५० ॥

ननु एकैकस्य गुणानाम् अन्योऽन्यमिथुनभावात् कथं प्रकृतेः सृष्टिवैचित्र्यम् इत्यत आह ॥

**कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ॥५१॥**

यथा गर्भदासः विचक्षणः विचित्रं कर्म कुरुते प्रभोः पर्याय, तथा प्रधानं पुरुषार्थं विचित्रां सृष्टिं कुरुते कर्मवैचित्र्यात् कर्मलाभात् ॥ ५१ ॥

उत्तरोत्तरभूमिलाभात् कृतकृत्यस्य किं मोक्षेण इत्यत आह ॥

**आवृत्तिस्तत्रापि, उत्तरोत्तरयोनियोगाद्धेयः ॥ ५२ ॥**

उत्तरोत्तरविशिष्टजन्मलाभे अपि संसारे आवृत्तिः । तस्मात् हेयः संसारः ॥ ५२ ॥

एतत् एव आह ॥

**समानं जरामरणादिजं दुःखम् ॥ ५३ ॥**

आब्रह्मस्तम्बपर्य्यन्तम् ॥ ५३ ॥

कारणे प्रकृतौ लयात् एव कृतकृत्यस्य किं मोक्षेण इत्यतः आह ॥

**न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥ ५४ ॥**

भवेत् एव, यदि प्रकृतिलीनस्य न पुनः आवृत्तिः । न तु एवं, पुनरावृत्तिश्रुतेः । तथा च

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं, सहस्रं त्वाभिमानिकाः ॥

मौरा इव सप्तापि तिष्ठन्ति विगतज्वराः ।
पूर्वं प्रतबन्धं तु तिष्ठन्त्यप्यविचिन्तया ।
निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते ॥

यथा सागरे मग्नस्य पुनः उत्थानं तथा प्रकृतिलीनस्य इत्यर्थः ॥ ५४ ॥

नित्यत्वात् यथा न आत्मनः बन्धः तथा प्रधानस्य अपि इत्यत आह ।

अकार्य्यत्वेऽपि तद्योगः पारवश्यात् ॥ ५५ ॥

अकार्य्यत्वम् अप्रयोजकं, किन्तु परतन्त्रत्वं, तच्च प्रकृतौ अस्ति इति । तद्योगात् च बन्धयोगः ॥ ५५ ॥

परः आत्मा चिद्रूपः इत्यत आह ।

स हि सर्ववित् सर्वकर्त्ता ॥ ५६ ॥

प्रकृतिप्रतिबिम्बितत्वात् एवम् अभिमानः ॥ ५६ ॥

तात्त्विकम् एव कर्तृत्वं भवतु किं प्रतिबिम्बकल्पनया तथा च न्यायाभिमत एव ईश्वरः अस्ति इत्यत आह ।

ईदृशेश्वरसिद्धिः सिद्धा ॥ ५७ ॥

यदि अस्मदभिमत आत्मा ईश्वरः, भवतु । न्यायाभिमते च प्रमाणं न अस्ति । एतच्च प्रथमाध्याये 'ईश्वरासिद्धेः' इति सूत्रे कथितम् । द्वितीयाध्याये 'विमुक्तमोक्षार्थम्' इति सूत्रे स्वार्थं परार्थं च प्रधानप्रवृत्तिः इति उक्तम् । अत्र स्वार्थस्य गौणत्वम् ॥ ५७ ॥

परार्थत्वम् एव आह ।

प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वादुष्ट्रकुङ्-कुमवहनवत् ॥ ५८ ॥

चेतनस्य अपि परार्थं प्रवृत्ति दृश्यते, यथा उष्ट्रः कुङ्कुम वहति । अचेतनायाः तु प्रकृतेः अभोक्तृत्वात् परार्थम् एव प्रवर्त्तनम् इति ॥ ५८ ॥

चेतनस्य प्रवृत्तिः दृष्टा, न अचेनस्य इत्यत्र आह ॥

## अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥५९॥

यथा क्षीरम् अचेतन वत्सार्थं प्रवर्त्तते, तथा प्रधान पुरुषार्थे प्रवर्त्तते ॥ ५९ ॥

दृष्टान्तान्तरम् आह ॥

## कर्मवद्व दृष्टेर्वा कालादेः ॥ ६० ॥

यथा कृषीवलेन कृतं कर्म धान्यारोपणादि कालात् एव फलति, न च वृक्षा. चेतनाः । आदिशब्दात् अदृष्ट ग्राह्यम् ॥ ६० ॥

उष्ट्रस्य अपि ताडनादिभयाभिसन्धानात् प्रवृत्ति दृश्यते, न च अचेतनाया प्रकृते अभिसन्धानम् अस्ति इत्यत्र आह ॥

## स्वभावाच्चेष्टितमनभिसन्धानाद्भृत्यवत् ॥६१॥

यथा गर्भदासभृत्य स्वामिनि अभिसन्धानशून्य. स्वभावात् एव कार्य्यं करोति, तथा प्रकृतिः इति ॥ ६१ ॥

पक्षान्तरम् आह ॥

## कर्माकृष्टेर्वाप्यनादितः ॥ ६२ ॥

अनादित्वात् ससारस्य धर्माधर्माकर्षणात् प्रधानं प्रवर्त्तते, यथा पुत्रा कर्मवशात् अचेतनाः अपि वृक्षा. फलन्ति इति ॥ ६२ ॥

युक्तिवहुत्वात् पुनर्वचन न पुनरुक्ततादोषाय इत्यतः आह ॥

अत्र न्यायम् आह ॥

कर्मनिमित्तयोगाच्च ॥ ६७ ॥

विवेकिनं प्रति कर्मणः निमित्तस्य अभावात् न बीजं विना अङ्कुरो भवति । श्रुतिः अपि

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ६७ ॥

अदृष्टस्य बुद्धिकार्य्यत्वात् अहङ्काराद्युत्पत्तौ भवतु अदृष्ट-सहायता, प्रकृतेः स्वकार्य्यकारणे का अदृष्टसहकारिता इत्यत आह ॥

नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥ ६८ ॥

अदृष्टनैरपेक्ष्ये अपि प्रकृतेः अविवेकः सहकारी इति ॥ ६८ ॥

प्रकृतिनिवृत्तिं दृष्टान्तेन आह ॥

नर्त्तकीवत् प्रवर्त्तकस्यापि निवृत्तिश्चारितार्थ्यात् ॥ ६९ ॥

यथा नर्त्तकी परिषच्चारितार्थ्यात् निवर्त्तते, तथा प्रकृतिः अपि पुरुषस्य विवेकचारितार्थ्यात् सर्गात् निवर्त्तते ॥ ६९ ॥

निवृत्ता अपि प्रकृतिः कुतः अपि कारणात् प्रवर्त्तिष्यते इत्यत आह ॥

दोषबोधेऽपि नोपसर्पणं प्रधानस्य, कुलवधूवत् ॥ ७० ॥

स्वदोषविज्ञानात् विवेकिनं प्रकृतेः न उपसर्पणं, यथा

कुलवधूः परपुरुषेण दृष्टा 'न पुनः' तदर्थं मे प्रविशति इति पश्चिमा कुरुते ॥ ७० ॥

यत्र बन्धः तत्र मोक्षः । न च पुरुषस्य तौ स्त इत्यत आह ।

नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ॥ ७१ ॥

प्रकृतिपुरुषाविवेकात् बन्धमोक्षौ इति अभिमानमात्रम् इति ॥ ७१ ॥

अतस्तस्य तत्पूर्वकत्वात् तत्र बन्धमोक्षौ सत्यौ इत्यत आह ।

प्रकृतेराञ्जस्यात् ससङ्गत्वात्, पशुवत् ॥७२॥

आञ्जस्यात् तत्त्वात् । ससङ्गत्वात् गुणयोगात् । यथा पशुः सङ्गात् गुणयोगात् बध्यते । तस्मात् प्रकृतेः बन्धमोक्षौ सत्यौ । अविवेकिनं प्रति प्रवर्त्तनम् एव बन्धः, मोक्षः पुनः विवेकिनं प्रति अप्रवर्त्तनम् । तेन च न समानश्रुतिदोष इति ॥ ७२ ॥

केन रूपेण प्रकृतिः आत्मानं बध्नाति केन च विमोचयति इत्यत आह ।

रूपैः सप्तभिरात्मानं बध्नाति प्रधानं, कोश-कारवत्, विमोचयत्येकेन रूपेण ॥ ७३ ॥

रूपैः सप्तभिः धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैः बध्नाति । विमोचयति एकेन रूपेण ज्ञानेन ॥ ७३ ॥

कामाकामधर्माभ्यां भुक्तिः मुक्तिश्च इति । तत्रापि दृष्टान्तम् इत्यत आह ।

निमित्तत्वमविवेकस्येति न दृष्टहानिः ॥७४॥

अदृष्टस्य ज्ञानद्वारेण परम्परया कारणत्वं युक्तं। संसारस्य तु कारणम् अविवेकः। तस्मात् न दृष्टहानिः इति ॥७४॥

विवेकश्च कथं स्यात् इत्यत्र आह ॥

तत्त्वाभ्यासान्नेति नेतीति त्यागाद् विवेकसिद्धिः ॥ ७५ ॥

स्पष्टम्। श्रुतिश्च 'स एष नेति नेत्यात्माऽगृह्यः, न हि गृह्यते, अशीर्य्यः, न हि शीर्य्यते' इत्यादि ॥ ७५ ॥

यदि तत्त्वाभ्यासादिना मोक्षः, उपदेशानन्तरं सर्वेषाम् मुक्तिः स्यात्, अभ्यासस्य तुल्यत्वात् इत्यत्र आह ॥

अधिकारिप्रभेदान्न नियमः ॥ ७६ ॥

उत्तममध्यमाधमशक्तिभेदात् एकदा इति न नियमः ॥७६॥

यदि विवेकात् मुक्तिः, कथं विवेकिनो भोगदर्शनम् इत्यत्र आह ॥

वाधितानुवृत्त्या मध्यविवेकतोऽप्युपभोगः ॥७७॥

तीव्रविवेकस्य उपभोगः न अस्ति। मध्यविवेकस्य अपि उपभोग रागाभावात् अलम् इति ज्ञानेन बाधितत्वात् वासनानुवृत्तिमात्रम्। उपारूढफल कर्मोपभोगात् क्षिणोमि इति उपभुङ्क्ते इति ॥ ७७ ॥

मध्यविवेकिनः स्वरूपम् आह ॥

जीवन्मुक्तश्च ॥ ७८ ॥

मुक्तः इव मुक्तः रागाभावात् धर्मानुत्पत्तेश्च। श्रुतिः अपि

संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥

जीवन्मुक्तिसिद्धिः ॥ ८३ ॥

कदा परममुक्तिः इत्यत आह ॥

विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यः नेत-रान्नेतरात् ॥ ८४ ॥

निःशेषेण विविधदुःखस्य अत्यन्तनिवृत्तौ कृतकृत्यः, परमुक्तिप्राप्तेः। नेतरात् कर्मणः इति ॥ नेतरात् इति वीप्सा अध्यायपरिसमाप्तौ ॥ ८४ ॥

कापिलसांख्यप्रवचनसूत्रवृत्तौ
वैराग्याध्यायस्तृतीयः ॥

---

वैराग्यानन्तरं शिष्यप्रबोधाय आख्यायि-
काभिः चतुर्थाध्यायारम्भः ।

राजपुत्रवत् तत्त्वोपदेशात् ॥ १ ॥

कश्चित् राजपुत्रः गण्डजन्मना निःसारितः शबराधिपेन गृहीतः पुत्रत्वेन तदाचारमात्रं जानाति। अथ अपुत्रस्य राज्ञः मरणे अमात्येः आनीय प्रबोधितः 'न त्वं शबरः, राजपुत्र असि' इति उक्तः झटिति एव पूर्वसंस्कारवशात् राजपुत्राचारं गृहीतवान्। एवं मन्दानाम् अपि प्रबोधाय उपदेशः देयः इति ॥ १ ॥

आख्यायिकान्तरम् आह ॥

पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥

कश्चित् आचार्यैः 'विजने उपदेशं ददाम' इति विजनम् आदाय अटवीं प्रविश्य उपदेशं दत्तवान्। गुल्मान्तरितेन पिशाचेन श्रुतम्। तस्य अपि मुक्तिः अभूत्। प्रसङ्गेन अपि आत्मज्ञानात् मुक्तिः इति वाक्यार्थः ॥ २ ॥

अत्र विशेषम् आह ॥

आवृत्तिरसकृदुपदेशात् ॥ ३ ॥

तीव्रवैराग्याणां श्रुतिमात्रात् मोक्षो भवतु। मन्दानां निरन्तरोपदेशात् आवृत्तिः कर्त्तव्या ॥ ३ ॥

आख्यायिकान्तरम् आह ।

पितापुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥

कश्चित् ब्राह्मणः दारिद्र्यात् गुर्विणीं भार्यां तत्पितृगृहे निक्षिप्य प्रतिग्रहार्थं देशान्तरं गतः बहुना कालेन स्वगृहम् आगतः पुत्रं दृष्ट्वा न ज्ञातवान् तन्माता भर्त्तारं पुत्रञ्च विज्ञापितवती। ततः उभयोः अपि ज्ञानम् अभूत्। गुरुं विना सकृदुपदेशात् अपि तत्त्वज्ञानं भवति इत्यर्थः ॥ ४ ॥

आख्यायिकान्तरम् आह ।

श्येनवत् सुखदुःखी त्यागवियोगाभ्याम् ॥ ५ ॥

केन अपि क्षुधा श्येनशावकः प्राप्तः मांसखण्डादिना आत्मन एव समानेन च पुष्टः। क्रमेण यौवनम् अवाप। अहम् एवं दुःखिनं करोमि इति क्षुधा वने त्यक्तः। श्येनश्च बन्धनाभावात् सुखी पुत्रवियोगात् दुःखी इति। दुःखप्रयोजकत्वात् सुखस्य त्यागमपि श्रेयम् इति ॥ ५ ॥

आख्यायिकान्तरम् आह ॥

अहिनिर्ल्वयिनीवत् ॥ ६ ॥

निर्लयनी निर्मोकः। कश्चित् अहिः विवरद्वारे निर्मोकं त्यक्त्वा ममेदम् इति धूलीपङ्काक्त दृष्ट्वा शोचति, स्नेहात् च न सत्यक्तवान्। निर्मोकानुसारात् केन अपि आहितुण्डिकेन गृहीत। ममत्वस्नेहादयः न कर्त्तव्या इत्यर्थः॥ ६॥

आख्यायिकान्तरम् आह॥

छिन्नहस्तवद्वा॥ ७॥

कश्चित् मुनिः भ्रातुः आश्रम प्रविश्य फलादिकम् आजहार। भ्रात्रा अपि उक्त स्तेयी त्वम् इति। तेन उक्तं प्रायश्चित्त वद। भ्रात्रा अपि उक्तं हस्तच्छेदात् अन्यत् प्रायश्चित्त न अस्ति इति। तेन च राज्ञे निवेद्य स्वहस्तौ छेदितौ। तस्मात् अकार्य्यं न कर्त्तव्यं, प्रमादकृते च तन्निष्कृति. अवश्यं कर्त्तव्या इति॥ ७॥

आख्यायिकान्तरम् आह॥

असाधनानुचिन्तनं बन्धाय भरतवत्॥८॥

भरत' नाम नृप प्रत्यासन्नमोक्ष अपि तत्क्षणप्रसूतां हरिणीं दृष्ट्वा हरिणशावक पुपोष। तं विहाय नान्यमनाः बभूव। मरणसमये तद्गतमना प्राणान् तत्याज। तत्सङ्गात् मुक्ति न अवाप। अनिष्टचिन्तनं न कार्य्यम् इत्यर्थः॥ ८॥

बहुभिर्मेलकं न कुर्य्यात् इत्याह॥

बहुभिर्योगविरोधो रागादिभिः कुमारीशङ्खवत्॥ ९॥

बहुभि कलह. अवश्य, यथा कुमारीशङ्खानाम् अन्योऽन्यं झणत्कार' परस्परसङ्घर्षात्॥ ९॥

द्वाभ्याम् अपि न कुर्य्यात् इत्याह॥

यथा लोके बहुभिः कृतसमयलङ्घनं सर्वे परित्यजन्ति, तथा व्रतादिलङ्घनात् वेदार्थबाह्य भवति इति ॥ १५ ॥

तत्त्वज्ञानविस्मरणेन दुःखम् अवश्य भवति इत्याह ॥

## तद्विस्मरणेऽपि भेकीवत् ॥ १६ ॥

कश्चित् नृपः मृगयां गतः वने सुन्दरीं कन्याम् अपश्यत् । ताम् अपृच्छत् का त्वम् इति । सा प्राह राजदुहिता अहम् । राजा प्राह मां भजस्व । सा प्राह वाढं, किन्तु समयं कुरु, त्वया जलं मम न दर्शनीयम् इति । एवम् अस्तु इति उक्त्वा तस्याः पाणिं जग्राह । एवं गते काले क्रीडया आयासिता कुत्र जलम् इति राजानं पप्रच्छ । राजा अपि सम्भ्रमात् समयं विस्मृत्य जलम् अदर्शयत् । सा च भेकराजदुहिता जलस्पर्शात् भेकी बभूव । राजा अपि जालादिना ताम् अन्विष्य अप्राप्य बहु दुःखम् अनुबभूव । तस्मात् तत्त्वाभ्यासविच्छेदः न कार्य्यं इति ॥ १६ ॥

आख्यायिकान्तरम् आह ॥

## नोपदेशश्रवणेऽपि कृतकृत्यः परामर्शादृते विरोचनवत् ॥ १७ ॥

न श्रवणमात्रात् मुक्तिः, किन्तु मननात् एव । यथा इन्द्रविरोचनौ तत्त्वज्ञानाय ब्रह्मलोकं गतौ ब्रह्मणा च उपदिष्टौ । विरोचनः तत्त्वज्ञानश्रवणात् स्वगृहम् आगतः न मननादि कृतवान् । अतः न अमुच्यत । इन्द्रः तु ब्रह्माणम् आराधयन् बहुकालं मननम् अकरोत् ॥ १७ ॥

इन्द्रस्य किं वृत्तम् इत्यत आह ॥

## दृष्टस्तयोरिन्द्रस्य ॥ १८ ॥

ब्रह्मादिलोकलाभात् कृतकृत्यस्य किम् आत्मज्ञानेन इत्यत्र आह ॥

**इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ॥ २२ ॥**

अग्निष्टोमादिना ब्रह्मलोकप्राप्तिः, कर्मजस्य क्षीयते इति पुनरावृत्तौ जन्मश्रुतिः 'यथा इह कर्मजितः लोकः क्षीयते, एवम् एव अमुत्र पुण्यजितः लोकः क्षीयते' इति,

'न कर्मणा न प्रजया धनेन, त्यागेनैके अमृतत्वमानशु' इति ॥ २२ ॥

विरक्तस्य किं स्वरूपम् इत्यत्र आह ॥

**विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥ २३ ॥**

यद्यपि सर्वेषां हेयहानम् उपादेयोपादानं, तथापि प्रकरणविशेषात् हेयः संसारः, उपादेयः मोक्षः इति द्रष्टव्यम् ॥२३॥

अत्र युक्तिम् आह ॥

**लब्धातिशययोगात् तद्वत् ॥ २४ ॥**

हंसवत् हंसस्य एव अतिशयशक्तिः येन मिश्रितम् अपि क्षीरं पिबति जलं त्यजति । तथा लब्धातिशयस्य पुंसः संसारः हेयः उपादेयः मोक्षः इति ॥ २४ ॥

सरागस्य अपि मुक्तिः भविष्यति इत्यत्र आह ॥

**न कामचारित्वं रागोपहते शुकवत् ॥२५॥**

रागोपहतस्य कामचारित्वम् एव न अस्ति, किं पुनः मुक्तिः इति । यथा व्यासस्य सरागस्य न मुक्तिः इति । तत्सुतस्य शुकस्य वीतरागत्वात् मुक्तिः भूता एवम् ॥ २५ ॥

सङ्गः बन्धम् इत्यत्र आह ।

गुणयोगाद् बद्धः शुकवत् ॥ २६ ॥

यथा शुकः पक्षी गुणयोगात् बन्धम् आप्नोति, तथा गुण-योगात् पुमान् अपि बन्धम् आप्नोति । २६ ।

भोगात् एव वैराग्यं कालक्रमात् भविष्यति, किं ज्ञानेन इत्यत आह ।

न भोगाद्रागशान्तिर्मुनिवत् ॥ २७ ॥

न मुनेः अपि भोगात् रागशान्तिः, किं पुनः अन्यस्य । यथा सौभरिप्रभृतयः । २७ ।

विषयिणां कथं वैराग्यं भविष्यति इत्यत आह ।

दोषदर्शनादुभयोः ॥ २८ ॥

उभयोः आत्मनः विषयस्य च । आत्मनः दोषः महार्तः नरकपातः गर्भवासादिश्च । विषयदोषः परिणतिविरसत्वादि । २८ ।

उपदेशानधिकारिणं सूचयन् आह ।

न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ॥२९॥

यथा ऊषरे क्षेत्रे न बीजप्ररोहः, तथा रागादिमलिन-चेतसि न उपदेशबीजप्ररोहः । 'अजवत्' इति अजनामनि नृपे मायामोहार्ते यथा वसिष्ठेन उपदेशः कृतः न फलितो बभूव । २९ ।

रागादिमलिने चेतसि न आभासज्ञानम् अपि इत्याह ।

नाभासमात्रमपि मलिनदर्पणवत् ॥ ३० ॥

यथा मलिने दर्पणे मुखाभासम् अपि न प्रतिभाति,

तथा प्रधानप्रतिविम्बितत्वात् आत्मनः प्रधानकार्य्यम् आत्मज्ञानम् ॥ ३० ॥

ननु महान् एव कारणरूपत्वात् आत्मा अस्तु इत्यत आह।

न तत्त्वस्यापि तद्रूपता पङ्कजादिवत् ॥३१॥

न कार्य्यम् एव कारणं भेदात्। न हि पङ्कजः एव पङ्कः ॥ ३१ ॥

अणिमादिविभूतिसिद्धस्य अपि न कृतकृत्यता इत्याह ॥

न भूतियोगे कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ॥ ३२ ॥

यथा गुरूपासनया तत्त्वज्ञानेन सिद्धस्य अनावृत्तेः कृतकृत्यता, तथा न भूतियोगेन, पुनरावृत्तेः ॥ उपास्यसिद्धिवत् इति वीप्सा अध्यायपरिसमाप्तौ ॥ ३२ ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ आख्यायिकाध्यायश्चतुर्थः ॥

---

आख्यायिकानन्तरं परपक्षनिरासार्थं पञ्चमाध्यायारम्भः।

मङ्गलाचरणं शिष्टाचारात् फलदर्शनाद् श्रुतितश्चेति ॥ १ ॥

कृते अपि मङ्गले ग्रन्थापरिसमाप्तेः अकृते अपि समाप्तेः, किं मङ्गलेन इति यैः उक्तं, तत् अनेन निरस्तम् ॥ १ ॥

पूर्वसिद्धम् ईश्वरासत्त्वम्। इदानीं न्यायम् आह ॥

रागश्च प्रवृत्तिनिमित्तम् इति स विना कथं जगन्निर्मातृत्व,
न च मुक्तस्य रागः अस्ति ॥ ६ ॥

रागः एव भविष्यति इत्यत्र आह ॥

**तद्योगेऽपि न नित्यमुक्तः ॥ ७ ॥**

रागयोगे अपि ॥ ७ ॥

प्रधानशक्तियोगात् कर्तृत्व भविष्यति इत्यत्र आह ॥

**प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ॥ ८ ॥**

'असङ्गो ह्यय पुरुषः' इति तद्विरोधापत्तिः ॥ ८ ॥

न प्रधानसङ्गः, किन्तु प्रधानसत्तामात्रेण कर्तृत्व भविष्यति इत्यत्र आह ॥

**सत्तामात्राच्चेत्, सर्वैश्वर्य्यम् ॥ ९ ॥**

सर्वात्मनः प्रति प्रधानसत्तायाः अविशेषात् सर्वात्मनाम् ईश्वरत्वम् ॥ ९ ॥

ईश्वरसाधनानि सन्ति। तत् कथम् इत्यत्र आह ॥

**प्रमाणाभावान्न तत्सिद्धिः ॥ १० ॥**

प्रत्यक्षप्रमाणाभावात् ॥ १० ॥

अनुमान भविष्यति इत्यत्र आह ॥

**सम्बन्धाभावान्नानुमानम् ॥ ११ ॥**

प्रत्यक्षपूर्वकत्वात् व्याप्ते तदभावात् कुतः सम्बन्धग्रहः। न च असाधारणस्य सम्बन्धग्रह ॥ ११ ॥

शाब्द प्रमाण भविष्यति इत्यत्र आह ॥

**श्रुतिरपि प्रधानकार्य्यस्य ॥ १२ ॥**

'प्रधानात् जगत् उत्पद्यते' इति श्रुतिः अस्ति। तस्मात् ईश्वरसाधकप्रमाणानि आभासानि ॥ १२ ॥

नेश्वराधिष्ठिते फलसम्पत्तिः, कर्मणा तत्सिद्धेः ॥ २ ॥

यदि ईश्वरः स्वतन्त्रः कर्त्ता, कर्मणा विनापि कुर्यात्। अथ कर्मसहकारी कुरुते। कर्म एव अस्तु किम् ईश्वरेण। न च सहकारी प्रधानमपि जायते। स्वातन्त्र्यविघातात्। किञ्च स्वार्थपरार्थाभ्यां प्रवृत्तिः दृष्टा। न च ईश्वरस्य स्वार्थः अस्ति। परार्थत्वे कारुणिकस्य दुःखमयसृष्ट्यनुपपत्तिः। न च परार्थप्रवृत्तिः परोपकारादिना अपि स्वार्थलाभात् प्रवृत्तेः। तस्मात् कर्म एव कारणम् अस्तु ॥ २ ॥

एतत् दर्शयति।

स्वोपकारादधिष्ठानं लोकवत् ॥ ३ ॥

न च नित्यस्य स्वोपकारः समस्ति ॥ ३ ॥

स्वोपकार एव भविष्यति इत्यत आह।

लौकिकेश्वरवदितरथा ॥ ४ ॥

असर्वज्ञ इत्यर्थः ॥ ४ ॥

दूषणान्तरम् आह।

पारिभाषिको वा ॥ ५ ॥

प्रकृतिच्छायापन्नः तत् कर्त्ता स्यात् आत्मा एव कर्त्ता इति तस्य ईश्वरसंज्ञा इति परिभाषा इति ॥ ५ ॥

हेत्वन्तरम् आह।

न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥ ६ ॥

अविनाभावस्य कारणस्य व्यभिचारे सर्वत्र अनाश्वासः।

यदि विद्यया अविद्या न बाध्यते, विद्या एव न भवि-ष्यति इति ॥ १७ ॥

बाध्यते एव इत्यत आह ॥

विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥

जगतः अपि अविद्यात्वम् ॥ १८ ॥

अस्तु जगतः अपि अविद्यात्वम् इत्यत आह ॥

तद्रूपत्वे सादित्वम् ॥ १९ ॥

अनादिः इयम् अविद्या । जगतः तद्रूपत्वे अविद्यायाः सादित्वम् ॥ १९ ॥

न कर्मणः जगत्कारणत्वं, स्वभावात् एव जगत् उत्पद्यते इत्यत आह ॥

न धर्मापलापः प्रकृतिकार्य्यवैचित्र्यात् ॥२०॥

प्रकृतेः नित्यत्वात् स्वभावस्य एकत्वात् धर्माभावात् विचित्रकार्य्यानुत्पत्तिः । तस्मात् धर्मभेदेन कार्य्यवैचित्र्यम् । न धर्मापलापः ॥ २० ॥

धर्मसिद्धौ प्रमाणम् आह ॥

श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥

'श्रुति' इति शाब्दं प्रमाणं दर्शितं, 'लिङ्ग' इति अनुमानम् । आदिशब्दात् योगिप्रत्यक्षं दर्शितम् । एभिः धर्मसिद्धिः ॥ २१ ॥

यदि देशकालयोः न कारणत्वं, कथं काश्मीरे कुङ्कुमं, वसन्ते चूतमुकुलोत्पत्तिः इति आह ॥

न नियमः, प्रमाणान्तरावकाशात् ॥२२॥

यदि विद्यया अविद्या न बाध्यते, विद्या एव न भविष्यति इति ॥ १७ ॥

बाध्यते एव इत्यत आह ॥

## विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥

जगतः अपि अविद्यात्वम् ॥ १८ ॥

अस्तु जगतः अपि अविद्यात्वम् इत्यत आह ॥

## तद्रूपत्वे सादित्वम् ॥ १९ ॥

अनादिः इयम् अविद्या । जगत तद्रूपत्वे अविद्यायाः सादित्वम् ॥ १९ ॥

न कर्मैव जगत्कारणत्वं, स्वभावात् एव जगत् उत्पद्यते इत्यत्र आह ॥

## न धर्मापलापः प्रकृतिकार्य्यवैचित्र्यात् ॥२०॥

प्रकृतेः नित्यत्वात् स्वभावस्य एकत्वात् धर्माभावात् विचित्रकार्य्यानुत्पत्तिः । तस्मात् धर्मभेदेन कार्य्यवैचित्र्यम् । न धर्मापलापः ॥ २० ॥

धर्मसिद्धौ प्रमाणम् आह ॥

## श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥

'श्रुति' इति शाब्दं प्रमाणं दर्शितं, 'लिङ्ग' इति अनुमानम् । आदिशब्दात् योगिप्रत्यक्षं दर्शितम् । एभिः धर्मसिद्धिः ॥ २१ ॥

यदि देशकालयोः न कारणत्वं, कथं काश्मीरे कुङ्कुमं, वसन्ते चूतमुकुलोत्पत्तिः इति आह ॥

## न नियमः, प्रमाणान्तरावकाशात् ॥२२॥

पनिगमनम् इति। अनेन पक्षधर्मत्व सपक्षसत्त्वं विपक्षात् व्यावृत्तिः असत्प्रतिपक्षत्वम् अबाधितविषयत्व सिद्धम् ॥ २७ ॥

सकृद्दर्शनात् न व्याप्तिः इति आह ॥

न सकृद्ग्रहणात् सम्बन्धसिद्धिः ॥ २८ ॥

सप्रतीतिविरोधात्। तथा च वह्निरासभयोः सकृद्दर्शनात् अनुमान स्यात्। न एव प्रतीयते इति ॥ २८ ॥

का इयं व्याप्तिः इत्यत आह ॥

नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥ २९ ॥

उभयो इति समव्याप्तिकयोः कृतकत्वानित्यत्वयोः। एकतरस्य विषमव्याप्तिकस्य धूमस्य इति। तथा च

यावज्ञाव्यतिरेकित्व शताशेनापि शङ्क्यते।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥ २९ ॥

तत्त्वान्तर व्याप्ति इति। तत् निराकरोति ॥

न तत्त्वान्तरं, वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥

तत्त्वान्तरस्वीकारे अपि व्यभिचारः वक्तव्यः। सः एव अस्तु, किं वस्तुकल्पनया इति ॥ ३० ॥

स्वमतम् आह ॥

निजशक्त्युद्भवमित्याचार्य्याः ॥ ३१ ॥

अस्ति वह्निधूमयोः निजा शक्तिः। सा इयं दर्शनेन गृह्यते। सा एव व्याप्तिः इति ॥ ३१ ॥

एकदेशिमतम् आह ॥

आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥

यदि निजा शक्तिः, अव्युत्पन्नस्य अपि वस्तुनः दर्शनात्

## वाच्यवाचकसम्बन्धः शब्दार्थयोः ॥ ३७ ॥

तादात्म्यपक्षे घटः अपि श्रोत्रग्राह्यः स्यात्, शब्दः अपि चाक्षुषः भवेत्, अग्न्याद्युच्चारणे मुखदाहादिप्रसङ्ग. इति ॥३७॥

अत्र हेतुम् आह ॥

## त्रिभिः सम्बन्धसिद्धेः ॥ ३८ ॥

त्रिभिः प्रकारैः व्युत्पत्तिग्रहणात् । आप्तोपदेशात्, यथा 'अयं घट.' इति । वृद्धव्यवहारात्, यथा 'गामानय शुक्लां दण्डेन' इति, अत्र प्रयोजकवृद्धवाक्यात् प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा बालस्य । प्रसिद्धपदसामानाधिकरण्यात्, यथा 'पिको आम्रं भक्षयति' इति श्रुत्वा आम्रभक्षणार्थं जानाति, पिको इति तदानीं प्रतिपद्यते ॥ ३८ ॥

कार्य्ये व्युत्पत्ति इति नियमं व्युदस्यति ॥

## न कार्य्ये नियम उभयथा दर्शनात् ॥३९॥

कार्य्ये व्युत्पत्तिर्दृष्टा, यथा 'अहरहः सन्ध्यामुपासीत' इति । सिद्धार्थे च दृष्टा, यथा 'हरिर्देवाधिदेव' । तथा हि विध्यर्थवादमन्त्रात्मका वेदा । विधौ कार्य्यैकार्थसमवेतायाम् इष्टसाधनताया प्रामाण्यम् । विधिशक्तेः उत्तम्भकत्वेन अर्थवादस्य अपि पारम्पर्य्येण प्रवर्त्तकत्वात् प्रामाण्यम् । विहितस्मारकत्वेन मन्त्रस्य अपि प्रामाण्यम् । यत् तु प्रवृत्तिनिमित्तत्वात् मन्त्रार्थवादयो प्रामाण्य, न तु प्रतिपादकत्व, तत् न । उत्पत्तौ अस्ति प्रवृत्त्यर्थत्व, ज्ञप्तौ तु सिद्धार्थपरत्वम् एव । तस्मात् सिद्धार्थप्रतिपादकयो अपि अर्थवादमन्त्रयो प्रामाण्यम् इति ॥ ३९ ॥

अतीन्द्रियत्वात् वेदार्थस्य कथम् उभयथा व्युत्पत्ति. इत्यत्र आह ॥

प्रसिद्धाप्रसिद्धेषु लौकिकवैदिकपदार्थेषु ज्ञानजनकत्वात् व्युत्पत्तिसिद्धिः ॥ ४४ ॥

वेदनित्यत्व निराकरोति ॥

## न नित्यत्वं वेदानां कार्य्यत्वश्रुतेः ॥ ४५ ॥

श्रुतिः तावत् 'नाहरासीन्न रात्रीरासीत्' 'स तपोऽतप्यत, 'तस्मात्तपस्तपनात्त्रयो वेदा अजायन्त'। अनुमानं च कृतकत्वात् इत्यादि। प्रत्यक्षेण अपि उच्चरितप्रध्वंसिनः वर्णाः इति गृह्यन्ते। यस्तु 'स एवायं कवर्ण' इति प्रत्ययः, स सामान्यविषयः ॥ ४५ ॥

अनित्यत्वात् पौरुषेया, वेदाः इति। तत्र आह ॥

## न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात् ॥४६॥

निराकृत ईश्वरः इति अभिसन्धिः ॥ ४६ ॥

अन्यः एव कर्त्ता भविष्यति इत्यत्र आह ॥

## न, मुक्तामुक्तयोरयोग्यत्वात् ॥ ४७ ॥

मुक्तस्य नि सङ्गत्वात् कर्त्तृत्वायोगात्, असुक्तस्य युगपदुपादानानभिज्ञत्वात् इति ॥ ४७ ॥

अपौरुषेयत्वात् तर्हि नित्यत्वम्। अतः आह ॥

## नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥४८॥

स्पष्टम् ॥ ४८ ॥

अङ्कुरादीनाम् अपि सकर्त्तृकत्व कार्य्यत्वात् इति पक्षे मुक्तस्य कर्त्तृत्वम् इत्यत्र आह ॥

## तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥४९॥

अङ्कुरादीनां कर्त्तुः अदृश्यत्वात् प्रत्यक्षबाध। अयोग्यत्व

इदं रजतम् इति 'इदम्' इति पुरोवर्त्ति विषयं, 'रजतम्' इति स्मरणम्। द्वे इमे संवित्ती। भेदाग्रहात् प्रवृत्तिः॥ न, अभेदग्रहणात् प्रवृत्तिदर्शनात्, न इदं रजतम् इति बाधाच्च। न च सम्यग्ज्ञानस्य बाधः अस्ति। तथा सति अयं घटः इति ज्ञाने जाते 'न अयं घटः' इति ज्ञानं स्यात्॥ ५३॥

वेदान्तिमतं दूषयति॥

## नानिर्वचनीयस्य, तदभावात्॥ ५४॥

इदं रजतम् इति असत्त्वे अपरोक्षज्ञानाभावात् सत्यत्वे बाधाभावात्, अतः सदसद्विलक्षणानिर्वचनीयत्वम्। तथा च

न सत्त्वे बाधसंवित्तिर्न भानमसतोऽपि च।
न द्वयात्म विरुद्धत्वादतस्तत्त्वान्तरं कुतः॥
मायामयत्वसिद्धौ तु प्रपञ्चस्य प्रमाणतः।
प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम्॥
अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम्।
प्रमाणभावं भजते बाधवैधुर्य्यहेतुतः॥
तस्मान्मायामयत्वेऽपि युक्ता ब्रह्मणि मानता।
अद्वैतागमवाक्यानामिति तावद् व्यवस्थितम्॥

तत् न, इदं रजतम् इत्यनेन एव निर्वचनीयत्वात्, 'न सन्नासन्' इति अनिर्वचनीयत्वेन निर्वचनाच्च॥५४॥

न्यायमतं दूषयति॥

## नान्यथाख्यातिः, स्ववचोव्याघातात्॥५५॥

इदं रजतम् इति शुक्तिः एव रजतात्मना अवभासते इति। न। अन्यत् अन्यात्मना अवभासते इति संविद्विरुद्धम्॥५५॥

आरोपितरजतम् एव तत्र अवभासते इति स्वमतम् आह॥

सदसत्ख्यातिर्बाधाबाधात् ॥ ५६ ॥

इदं रजतम् इति पुरोवर्त्तिविषयतया सत्, अबाधनात्। रजतविषयतया तु असत् बाधात्। तस्मात् सदसती तत्त्वम् ॥ ५६ ॥

स्फोटं निराकरोति ॥

प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥

प्रतीतिः वर्णेषु अप्रतीतिः स्फोटे। तस्मात् न स्फोटात्मकः शब्दः। यदि वर्णाः मिलन्तोऽपि न प्रतिपादयन्ति स्फोटप्रतिपादनम् अपि कुतः। अथ प्रतिपादयन्ति किम् अन्तर्गडुना स्फोटेन वर्णा एव प्रतिपादकाः सन्तु। नानात्वाद् अपि न स्फोटसिद्धिः ॥ ५७ ॥

प्रत्यभिज्ञाबलात् वेदस्य अनित्यत्वम् उक्तम्। वर्णानाम् अनित्यत्वं प्रतिपादयति ॥

न शब्दनित्यत्वं कार्यताप्रतीतेः ॥ ५८ ॥

प्रत्यक्षादि शब्दध्वंसानन्तरं न अस्ति इति प्रतीतेः। अन्यथा घटस्य अपि नित्यत्वं स्यात् ॥ ५८ ॥

प्रत्यभिज्ञाबलात् अभूत् पूर्वं कार्यम् इति प्रतिपादनार्थं प्रवृत्ते ॥

पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥ ५९ ॥

यथा अन्धकारस्थः घटः दीपेन अभिव्यज्यते तथा वर्णाः अपि अभिव्यज्यन्ते। तदभावात् न अस्ति इति प्रतिभानं न तु असत्त्वात् ॥ ५९ ॥

समाधानम् आह ॥

## सत्कार्य्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥ ६० ॥

अभिव्यक्तिम् आश्रित्य नित्यत्वम् उच्यते, तत. सत्कार्य्यसिद्धान्त. चेत्, सिद्धसाधनम् ॥

एक. एव आत्मा। तथा च

सितनीलादिभेदेन यथैक दृश्यते नभ'।
भ्रान्तदृष्टिभिरेवात्मा तथैक' सन् पृथक् पृथक् ॥ ६० ॥

तत् निराकरोति ॥

## नाद्वैतमात्मनः, लिङ्गात्तद्भेदप्रतीतेः ॥६१॥

जरामरणादिलिङ्गनियमात् ॥ पूर्वत्र सिद्धवत् उक्त, इदानी साध्यते इति अपौनरुक्त्यम् ॥ ६१ ॥

मा भूत् सजातीयाद्वैतम्। अनात्मान भविष्यन्ति घटादयः तु आत्मरूपा. इति विजातीयाद्वैतं भविष्यति इत्यत्र आह ॥

## नानात्मनापि, प्रत्यक्षबाधात् ॥ ६२ ॥

न अनात्मना घटादिना आत्मन एकत्व, घटादीना बाह्यत्वेन भेददर्शनात्। एकत्वे घटादीनाम् आत्मत्वम् आत्मनश्च परिणामित्वम् इति ॥ ६२ ॥

सजातीयविजातीयाद्वैत भविष्यति इत्यत्र आह ॥

## नोभाभ्यां, तेनैव ॥ ६३ ॥

अबाधितप्रत्ययेन एव भेददर्शनात् ॥ ६३ ॥

एवम् अद्वैतश्रुतिविरोध इत्यत्र आह ॥

## अन्यपरत्वमविवेकानां तत्र ॥ ६४ ॥

अन्धाना तच्छ्रुते अन्यपरत्व सामान्यपरत्वम् ॥ ६४ ॥

एकात्मवादिना जगदुपादानकारणम् अपि न अस्ति इति आह ॥

न आनन्दरूपत्वं, द्वयोः भेदात् । तयोः अलौकिकत्वेन अभेद-सिद्धिः इत्यपि न, अलौकिकत्वात् एव व्याप्तिग्रहणाभावात् । तत न आत्मनः द्विरूपत्वम् इति ॥ यदि च मुक्तौ आनन्द न अनुभूयते, किं तेन । अनुभूयते चेत्, अनुभवितनुभवानु-भवनीयाः वाच्याः । यथा च यावद्देहभावित्वेन आत्ममात्रात्-कारात् अपि समाधिः इति उच्यते, देहपातानन्तरम् आत्मन' स्थिति' इति क्व समाधिः । तथा च 'समाधौ सकलदुःख-निवृत्तेः आनन्दलाभ' इति अभिमन्यते । देहाभावात् समा-धिनाशे क्व आनन्दानुभव । एव च मुक्तौ आनन्दानुभव भ्रान्त' इति ॥ ६६ ॥

अथ आनन्दश्रुते का वार्त्ता । तथा च

आनन्द ब्रह्मणो विद्वान् न विभेति कुतश्चन ।
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ॥

इत्यत आह ॥

**दुःखनिवृत्तेर्गौणः ॥ ६७ ॥**

व्यक्तम् ॥ ६७ ॥

प्रकारान्तरम् आह ॥

**विमुक्तिप्रशंसा मन्दानाम् ॥ ६८ ॥**

मन्दाना तामसानाम् । विमुक्तिप्रशंसा प्रवर्त्तनार्थं प्रोत्-साहनम् इति ॥ ६८ ॥

मनोविभुत्व निराकरोति ॥

**न व्यापकत्व मनसः करणत्वादिन्द्रियत्वाद्वा, वास्यादिवच्चक्षुरादिवच्च ॥ ६९ ॥**

यत् च 'शिरसि मे वेदना, पादे मे सुखम्' इति ज्ञान मनस.

विभुत्वं प्रतिपादयति तदा पाकसञ्चारित्वात् क्रमाक्रमनिमित्तम्। न मनसो विभुत्वसिद्धिः ॥ ६९ ॥

सूत्रान्तरम् आह।

सक्रियत्वाद्गतिश्रुतेः ॥ ७० ॥

सक्रियत्वात् इति अनुमानं दर्शितम्। गतिश्रुतेः इति शब्दः दर्शितः ॥ ७० ॥

अणुत्वे अपि कारणाभावात् नित्यं भविष्यति इत्यत आह।

न निर्भागत्वं, तद्योगाद्घटादिवत् ॥ ७१ ॥

न निर्भागत्वं न अकारणकत्वम्। तद्योगात् सामग्रीयोगात्। किम् अस्य कारणम्। घटादिवत्। षट्केन युगपद्योगात् परमाणूनां सभागत्वसिद्धिः। तस्मात् घटादिवत् अनित्यं मनः ॥ ७१ ॥

नित्यानित्यविभागम् आह।

प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम् ॥ ७२ ॥

स्पष्टम् ॥ ७२ ॥

दिक्कालयोर्नित्यत्वात् कथं सर्वम् अनित्यम् इत्यत आह।

न भागलाभो भोगिनो निर्भागत्वश्रुतेः ॥ ७३ ॥

न कारणलाभः भोगिनः अस्मत्कारणस्य प्रधानस्य निर्भागत्वश्रुतेः 'मूलकारणत्वात् न अस्य कारणान्तरम्' इति श्रुतेः ॥ ७३ ॥

आनन्दाभिव्यक्तिः मुक्तिः इति। तत् दूषयति।

नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात् ॥ ७४ ॥

मुक्तौ धर्मधर्मिभावाभावात् । सा अभिव्यक्तिः किं सर्वदा अस्ति । संसारदशायाम् अपि मुक्तिप्रसङ्गः । अथ मुक्तौ क्रियते । कार्य्यभावस्य अवश्य नाशात् पुनः अनिर्मोच इति ॥ ७४ ॥

विशेषगुणोच्छित्तिः मोक्षः इति दूषयति ॥

## न विशेषगुणोच्छित्तिस्तद्वत् ॥ ७५ ॥

विशेषनिषेधात् सामान्यगुणस्वीकारः । तथा च गुणयोगात् अनिर्मोक्ष ॥ ७५ ॥

देहपरिमाणः आत्मा, तस्य देहमात्रात् गतिः एव मुक्ति इति । तत् दूषयति ॥

## न विशेषगतिर्निष्क्रियस्य ॥ ७६ ॥

न ऊर्ध्वगत्या मुक्तिः, 'निर्गुणनिष्क्रियनिर्धर्मकः आत्मा' इति श्रुते । कुत मुक्ति, हस्तिकृमिदेहपरिणामित्वेन सङ्कोचविकासाभ्यां सावयवत्वेन अनित्यश्च स्यात् ॥ ७६ ॥

बौद्धमुक्तिं दूषयति ॥

## नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥ ७७ ॥

स. किमाकारः ज्ञानस्वरूप । तथा च ज्ञानस्य अपि उच्छेद इति कस्य मुक्ति । अथ धर्म । क्षणिकत्वात् सर्वदा तन्नाशे संसारिणाम् अपि मुक्ति स्यात् । अथ वासनावशात् तदा न मुच्यते, वासनोच्छित्ति एव मोक्ष अस्तु, किमाकारोपरागोच्छित्त्या ॥ आदिशब्दात् स्वच्छसंवित्प्रवाहस्य अपि नश्वरत्वात् कस्य मुक्तिः इति ॥ ७७ ॥

बौद्धविशेषस्य मुक्तिं दूषयति ॥

न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥७८॥

स्पष्टम् ॥७८॥

शून्यं मुक्तिरिति दूषयति ।

एवं शून्यमपि ॥७९॥

अपुरुषार्थत्वादेः । आदिशब्दात् अनुत्पन्नाभावः सूचितः । यदि चात्मा नोच्छिद्यते तदा तत्परिपन्थिनि दोषः, तदभूते च मोक्ष इति तयोः बन्धहेतुत्वात् अनिर्मोक्षः स्यात् । मा एवम् । न हि रागद्वेषसद्भावात् बन्धः किन्तु तद्विशेषात् । यथा योगपक्ष एव न संवित्सन्तानसद्भावात् बन्धः, तत्र संवित्सन्तानस्य मोक्षावस्थत्वात् तथा चैतन्यात्मपरिपन्थिनि द्वेषात् निरुपचितात्मस्थितौ रागात् न बन्धः प्रत्युत मोक्षहेतुत्वम् एव इति ॥७९॥

स्वर्देश्वर्यविशेषात् मुक्तिरिति । तद् दूषयति ।

संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि ॥८०॥

देशसंयोगस्य वियोगान्तत्वात् पुनः संसारः । आदिशब्दात् आत्मकर्मणोऽपि परिग्रहः । आत्मयोगस्य अपि एवम् । कर्मणश्च अनित्यत्वात् पुनः संसार इति ॥८०॥

भागस्य जीवात्मनः भागिनि ब्रह्मणि योगः मुक्तिरिति । तत् दूषयति ।

न भागयोगोऽभागस्य ॥८१॥

न ब्रह्मणः भागः जीवात्मा ब्रह्मणः भागाभावात् । योगस्य वियोगान्तत्वात् पुनः बन्धप्रसङ्गः । तत्र संसारकारणाभावात् न वियोग इति, एवं चेत् स एव अस्तु किं भागयोगकल्पनया ॥८१॥

अणिमादिसिद्धिः एव मुक्तिः इत्यत्र आह ॥

**नाणिमादियोगोऽप्यवश्यम्भावित्वात्तदुच्छित्तेरितरवियोगवत् ॥ ८२ ॥**

तेषाम् अपि कार्य्यत्वात् अनित्यत्वम्। आदिशब्दात् लघिमा गरिमा प्राप्ति प्राकाम्यम् ईशित्वं वशित्व यत्रकामावसायित्वम् इति॥ ८२ ॥

परमैश्वर्य्यपदप्राप्तेः एव मुक्तिः इत्यत्र आह ॥

**नेन्द्रादिपदयोगोऽपि तद्वत् ॥ ८३ ॥**

अनित्यत्वात् ॥ ८३ ॥

भौतिकानि इन्द्रियाणि इति। तत् निरस्यति ॥

**न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः ॥ ८४ ॥**

तथा च,

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥

भूतप्रकृतित्वम् इति तु येन इन्द्रियेण यद्भूतकारण तन्मात्र गृह्यते, तस्य तत्प्रकृतित्वाभिमानात् व्यपदेशः ॥ ८४ ॥

षट्पदार्थज्ञानात् मुक्ति इत्यत्र आह ॥

**न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥ ८५ ॥**

द्रव्यगुणकर्मसामान्यविशेषसमवाया इति। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि इति द्रव्याणि। रूपरसगन्धस्पर्शा सङ्ख्या परिमाणानि पृथक्त्व संयोगविभागौ परत्वापरत्वे बुद्धय. सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दा गुणाः। उत्क्षेपणावक्षेपणाकुञ्चन-

विधं, वाक्छलं सामान्यच्छलम् उपचारच्छलं च। साधर्म्य-वैधर्म्याभ्यां प्रत्यवस्थानं जातिः। साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः। विप्रतिपत्तिः अप्रतिपत्तिश्च निग्रहस्थानम्। प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्यासः हेत्वन्तरम् अर्थान्तरं निरर्थकम् अविज्ञातार्थम् अपार्थकम् अप्राप्तकालं न्यूनम् अधिकं पुनरुक्तम् अननुभाषणम् अज्ञानम् अप्रातिभा विक्षेपः मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोग अपसिद्धान्तः हेत्वाभासाश्च निग्रहस्थानानि। इयन्त इति न नियमः, न वा तद्बोधात् मुक्तिः। आदिशब्दात् अन्ये अपि नियतपदार्थाः निराकार्य्याः ॥ ८६ ॥

नित्याः चतुर्विधाः परमाणवः, तैः एव महाभूतारम्भात् किं प्रधानेन इत्यत आह ॥

## नाणुनित्यता तत्कार्य्यत्वश्रुतेः ॥ ८७ ॥

प्रधानात् सर्वम् अजायत, प्रकृतिपुरुषात् अन्यत् सर्वम् अनित्यम् इति श्रुतेः कार्य्यत्वात् परमाणूनां न नित्यत्वं कारणत्वं वा ॥ ८७ ॥

एवं च परमाणुत्वम् एव न भवति इति आह ॥

## न तन्निर्भागत्वं कार्य्यत्वात् ॥ ८८ ॥

यत् कार्य्यं, न तत् निर्भागि, यथा घटः इति ॥ ८८ ॥

उद्भूतरूपवत्त्वात् च प्रत्यक्षम् इत्यत आह ॥

## न रूपनिबन्धनात् प्रत्यक्षत्वनियमः ॥ ८९ ॥

'इह मयं पक्षी' इति आकाशस्य प्रत्यक्षत्वात् व्यभिचा-

रात् तदनुरूपनियमाभावात् न प्रत्यक्षत्वनियमः। अलौकिके च समाधिजसन्निकर्षे तासामभावे न पर्यनुयोगः अस्ति ॥ ८८ ॥

अणु महत् दीर्घं ह्रस्वम् इति चतुर्विधं परिमाणं न भवति इति आह ॥

न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् ॥ ८९ ॥

महदणुभ्यां ह्रस्वदीर्घयोः व्यवहारसिद्धेः। एतत् प्रभेदा एव अन्ये परिमाणभेदा इति ॥ ८९ ॥

प्रकृतिपुरुषव्यतिरिक्तं सामान्यं नित्यम् अस्ति इत्यत आह ॥

अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ॥ ९० ॥

यथा 'स एव देवदत्त' इति न सामान्यविषया प्रत्यभिज्ञा तथा अनित्यत्वे अपि सामान्यस्य बहुकालस्थैर्यात् ज्वालादिष प्रत्यभिज्ञानम् इति ॥ ९० ॥

सामान्यापलापं निराकरोति ॥

न तदपलापस्तस्मात् ॥ ९१ ॥

न सामान्यापलापः, प्रत्यभिज्ञानात् परोक्षबुद्धेः प्रमाणभावात् ॥ ९१ ॥

अस्तु एकाकारा बुद्धिः सा अन्यनिवृत्तिपरा इत्यत आह ॥

नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥ ९२ ॥

अभावरूपत्वे प्रतियोगिस्मरणाधीनं ज्ञानं स्यात् न तु विधिमुखतया इति । तथा च

विरुद्धागौरपोढेन, गोनिषेधात्मकश्च सः ।

तत्र गौरिव वक्तव्यो नञा यः प्रतिषिध्यते।
गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः॥ ८३॥

सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यति इत्यत आह॥

न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः॥ ९४॥

भूयः अवयवसामान्ययोगः सादृश्यं, न तत्त्वान्तरं, प्रत्यक्षेण एव बहुतरतथावयवग्रहणात् 'तत्सदृशः अयम्' इति ज्ञानोत्पादात्॥ ९४॥

प्रकारान्तरम् आह॥

निजधर्माभिव्यक्तिर्वा वैशिष्ट्यात् तदुपलब्धेः॥ ९५॥

अस्ति पदार्थानां निजा शक्तिः। सा तुल्यपिण्डान्तरदर्शनात् अभिव्यक्ता विशिष्टा सती 'सदृशः अयम्' इति सादृश्योपलब्धेः कारणं, न तु तत्त्वान्तरं सादृश्यम्॥ ९५॥

सञ्ज्ञासञ्ज्ञिसम्बन्धज्ञानहेतुः सादृश्यम् इति तत्सिद्धिः इत्यत्र आह॥

न संज्ञासंज्ञिसम्बन्धोऽपि॥ ९६॥

न सम्बन्धज्ञानहेतुः सादृश्यं, व्यभिचारात्, अन्यत्र अपि उपदेशादेः सञ्ज्ञासञ्ज्ञिसम्बन्धनिश्चयात्। कारणव्युत्पत्त्या विषयिणः ज्ञानस्य उपलक्षणम्॥ ९६॥

शब्दार्थयोर्नित्यः सम्बन्धः इति निरस्यति॥

न सम्बन्धनित्यतोभयानित्यत्वात्॥ ९७॥

शब्दार्थयोः अनित्यत्वात् कथं सम्बन्धः नित्यः स्यात्॥ ९७॥

अजसम्बन्धम् अपाकरोति॥

नाजः सम्बन्धो धर्मिग्राहकप्रमाणबाधात्॥ ९८॥

संयोग [illegible] सवीत् न च लिङ्गस्य व्यापकस्य क्रिया अस्ति। मतदादयश्च अनित्याः कथं तत्संयोग नित्यः। आत्मनां च निधर्मत्वात् न तैः प्रधानेन संयोग अस्ति। किन्तु येन प्रमाणेन वस्तु प्रतीति तेन एव संयोग न चयम् इति।अतिप्रसङ्गप्रमाणाभावात् ॥ ९८ ॥

समवायं निरस्यति ॥

न समवायोऽस्ति प्रमाणाभावात् ॥ ९९ ॥

समवायः सम्बन्धः असम्बन्धो वा। असम्बन्धत्वे कथम् अर्थं सम्बन्धिनं कुर्यात्। सम्बन्धित्वे अन्यसम्बन्धस्य अस्वीकाराद् समवाय एव सम्बन्धः। तत्र अपि अन्यः तत्र अपि अन्य इति अनवस्थानात् न अस्ति समवायः। यः तु अविभागेन प्रतिभासः स संयोगविशेषवैचित्र्यात्, यथा तप्तायःपिण्डे वह्निः ॥ ९९ ॥

यदि समवायः न अस्ति कथं शुक्लः पटः इति अध्य गच्छति गौ चलम् इति प्रमाणम् इत्यत आह ॥

उभयत्राप्यन्यथासिद्धेः प्रत्यक्षमनुमानं वा ॥ १०० ॥

उभयत्र अपि तादात्म्येन एव उपपत्तेः अन्यथा सामानाधिकरण्यं न स्यात् इति ॥ १०० ॥

अनुमेया क्रिया स्यात् इत्यत आह ॥

नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतो-रेवापरोक्षप्रतीतेः ॥ १०१ ॥

निकटस्थस्य क्रियाक्रियावतोः एव अपरोक्षप्रतीतिः।

अन्यथा सिद्धस्य प्रत्यक्षस्य बाधात् यदि संयोगविभागाभ्यां कर्म अनुमीयते, तयोः उभयवृत्तित्वात् वृक्षमूलात् अग्रं गच्छति पुरुषे वृक्षे अपि कर्म अनुमीयेत। ननु पुरुषकर्मणा संयोगविभागसिद्धौ किमर्थं वृक्षे कर्म स्वीकर्त्तव्यम्। उत्पत्तौ भवेत् एव, अव्यभिचारात् तु संयोगविभागाभ्यां वृक्षे कर्मानुमानं न निवर्त्तते, किञ्च, अन्धकारे 'भुजाग्रं मे कम्पते' इत्यादौ कम्पमात्रज्ञानं भ्रान्तिः। सूर्य्यक्रियानुपलम्भश्च अतिदूरादिदोषात् ॥ १०१ ॥

पञ्चभूतारब्धं शरीरम् इत्यत्र आह ॥

## न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् ॥ १०२ ॥

बहूनां भिन्नजातीयानाम्। उपष्टम्भकत्वे तु चतुर्णां निमित्तत्वम् अस्ति एव। तेन च पाञ्चभौतिकत्वम् उच्यते इति ॥ १०२ ॥

नास्ति सूक्ष्मशरीरं प्रमाणाभावात् इत्यत्र आह ॥

## न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥ १०३ ॥

मनसः निराश्रयस्य गत्यभावात् मरणे देहप्राप्तये मनसः आश्रयः वक्तव्यः। स एव आतिवाहिकः सूक्ष्मशरीरम् इति। श्रुतिः अपि 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलात् यमः'। पुरि स्थूलशरीरे शेते इति पुरुषः सूक्ष्मदेहः ॥ १०३ ॥

अप्राप्तप्रकाशकम् इन्द्रियं दूरे शब्दोपलम्भात् काचाभ्रस्फटिकान्तरोपलब्धेश्च इत्यत्र आह ॥

पदार्थः यत्र। असम्बद्धस्य ज्ञानायोगात् तदर्थं सर्पति।
तथा च

वृत्तयः प्रसरद्रूपाः स्फारिताश्चास्य यत्र च।
अदृष्टानुग्रहात्तत्र सम्बद्धार्थावबोधिका:॥ १०७॥

कथम् अमूर्त्ताया वृत्तेः सर्पणक्रिया इत्यत आह॥

## न द्रव्ये नियमस्तद्योगात्॥ १०८॥

अनियतत्वात् पदार्थानां न द्रव्ये एव क्रियानियमः, किन्तु यत्र प्रमाणं दृश्यते तत् अनुमन्यामहे। वृत्तौ च क्रिया दृष्टा, अन्यथा वस्तूपलब्ध्यभावात्॥ १०८॥

देशभेदे भौतिकानि इन्द्रियाणि भविष्यन्ति, यथा वृश्चिकदष्टस्य देशभेदे मरणम् इत्यत आह॥

## न देशभेदेऽप्यन्योपादानतास्मदादिवन्नियमः॥ १०९॥

स्वशरीरे एव व्याप्तिः गृहीता, आहङ्कारिकाणि इन्द्रियाणि। तद्व्यभिचारे धूमः अपि अग्निं व्यभिचरेत्॥१०९॥

पाञ्चभौतिकम् इति व्यपदेशे हेतुम् आह॥

## निमित्तव्यपदेशात्तद्व्यपदेशः॥ ११०॥

पञ्चोपादानता निषिद्धा, न निमित्तता। तेन पाञ्चभौतिकम् इति व्यपदेशः॥ ११०॥

कति शरीरभेदाः इत्यत आह॥

## ऊष्मजाण्डजजरायुजोद्भिज्जसाङ्कल्पिकसांसिद्धिकं चेति न नियमः॥ १११॥

ऊष्मजाः दंशमशकादि। अण्डजाः पक्षिसर्पादयः। जरायुजाः मनुष्यादि। उद्भिज्जाः वृक्षादयः। सङ्कल्पजाः सनकादिः।

चातुर्विध्यं स्वेदजोपपादिकमिति। चत्वारि एव इति न नियमः ॥ १११ ॥

देहे किं भूतं प्रधानम् इत्यत आह ।

सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत् ॥ ११२ ॥

सर्वेषु इति बाहुल्येन सूर्यादिलोके तैजसं शरीरम् इति श्रूयते। तत्र अपि बहुतरपार्थिवावयवावष्टम्भकत्वम् अस्त्येव च मनुपभोगात्। पूर्ववत् इति सर्वत्र एव ज्ञानम् ॥ ११२ ॥

देहे प्राणदर्शनात् तस्य देहारम्भकत्वग्रहम् अपनयति ।

न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः ॥ ११३ ॥

भौतिककार्यो देहारम्भकत्वं न तु प्राणकार्यो भौतिकत्वं प्राणात् सर्वम् जायत इति श्रुतेः। यावद्देहसाधित्वे च चारम्भकत्वम्। सर्वेन्द्रियसहिता प्राणः धार्यते इति यावत् इन्द्रियं तावत् भक्तिरिति प्राणकारणत्वमिति ॥ ११३ ॥

देहे निर्माणे आत्माधिष्ठानं आत्माधिष्ठिते वा देहनिष्पत्तिः इति नियमम् आह ।

भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा पूतिभावप्रसक्तेः ॥ ११४ ॥

स्फुटम् ॥ ११४ ॥

प्रधानभूतत्वात् शरीरस्य तद्द्वारैव एव अधिष्ठानं अपि भवति इत्यत आह ।

भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् ॥ ११५ ॥

जडे भृत्ये अवलम्बिनी सर्वत्र स्वस्थितिः यथा, तथा जडस्य प्रधानस्य अधिष्ठानात् न पुंसिभावविरोधः॥ ११५॥

ब्रह्मरूपनिरूपणाय अन्येषां तुल्यरूपम् आह॥

**समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता॥ ११६॥**

ब्रह्मणा सह तुल्यरूपता, सर्वत्र बाह्यासवेदनात्, न तु ब्रह्मरूपता॥ ११६॥

ब्रह्मणः स्वरूपम् आह॥

**द्वयोः सबीजत्वमन्यस्य तद्धतिः॥ ११७॥**

द्वयोः समाधिसुषुप्त्योः सबीजत्वं संस्कारवत्त्व, अन्यस्य मोक्षस्य बीजहानम्॥ ११७॥

समाधिसुषुप्त्योः दृष्टा निरुद्धवृत्तिकत्वात् कृतकृत्यता, न तु मोक्षस्य इत्यत्र आह॥

**द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु द्वौ॥११८॥**

त्रयस्य अपि मोक्षस्य अपि दृष्टत्वात् श्रुत्यनुमानप्रतिपादनात् कृतकृत्यता, न तु द्वौ सुषुप्तिसमाधी। सबीजत्वात् तयोः कृतकृत्यता गौणी इति॥ ११८॥

रागादीनां बन्धहेतुत्वात् किं वासनया इत्यतः आह॥

**वासनयानर्थख्यापनं दोषयोगेऽपि, न, निमित्तस्य प्रधानबाधकत्वम्॥ ११९॥**

न दोषात् एव बन्ध इति वक्तव्यम्। वासनया अनर्थख्यापनम् अवश्य कर्त्तव्यम्। दोषाणाम् एव निमित्तस्य प्रधानस्य सुप्तौ बाधकत्व वक्तव्यम्। मुख्य च वासना इति॥११९॥

इष्वादिक्षेपे वेगाख्यात् संस्कारात् कर्म कर्मणा च संस्कारः इति अनेके संस्काराः। तत् निषेधति॥

पात्विकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ १२३ ॥

वृक्षादीनां देहत्वे कर्माधिकारिता स्यात् इत्यत आह ॥

## न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥ १२४ ॥

जीवदेहाः अपि चाण्डालादयः न कर्माधिकारिणः, किं पुनः स्थावराः इति, विशिष्टदेहस्य कर्माधिकारित्वात् ॥१२४॥

देहभेदम् आह ॥

## त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥ १२५ ॥

वीतरागाणां फलसन्यासेन कर्मकरणात् कर्मदेहः । पश्वादीनाम् उपभोगदेहः । भोगिनां कर्माधिकारिणां कर्मोपभोगदेहः ॥ १२५ ॥

चतुर्थम् अनधिकारिणं देहम् आह ॥

## न किञ्चिदप्यनुशयिनः ॥ १२६ ॥

'विद्यादनुशयं द्वेषे पश्चात्तापानुबन्धयो' शाश्वतः । अनुशयिनः योगिनः न किञ्चित् अपि सर्वानधिकारात् ॥१२६॥

नित्यां बुद्धिं निराकरोति ॥

## न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत् ॥ १२७ ॥

व्याप्तिस्वरूपस्य व्यभिचारे सर्वत्र अनाश्वासः । तथा च आश्रयविशेषे चन्दनप्रभवस्य वह्नेः अनुष्णत्वम् ॥ १२७ ॥

दूषणान्तरम् आह ॥

## आश्रयासिद्धेश्च ॥ १२८ ॥

ईश्वरस्य अप्रत्यक्षत्वात् आत्मनां च धर्माभावात्, प्रकृतिधर्माणां परिणामित्वात् महदादीनाम् अनित्यत्वात् । न च अनित्यानामपि धर्मा नित्या भवितुम् अर्हन्ति तस्मात् नित्यगुणे बाधकं न अस्ति ॥ १२८ ॥

मणिमन्त्रौषधितपःप्रभावात् सिद्धिः दृष्टा न तु योगसिद्धिः दृष्टा इत्यत आह ।

योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥ १२९ ॥

अणिमादिसिद्धिविधायकसूत्रपरम्परयैवाप्य दृष्टाः ताश्च मन्त्रादिभ्यः क्षुद्रसिद्धिप्रसङ्गः अवश्यम्भवन्ती योगम् एव भवस्य स्वस्य इति न अपलपनीयाः । १२८ ।

एवम्भूतानां चैतन्यात्मनाम् अपि संहता शरीरभावम् आपन्ना चेतयन्ति इत्यत आह ।

न भूतचैतन्यं प्रत्येकानुपलब्धेः सांहत्ये च सांहत्ये च ॥ १३० ॥

यस्य समस्ता शक्तिः अस्ति तस्य समुदायात् महच्छक्तिः जायते यथा तन्तूनां प्रत्येकशक्तिमतां समुदायात् गजबन्धनशक्तिः दृश्यते । न तथा भूतानां प्रत्येकं चैतन्यं दृष्टं येन सांहत्ये चैतन्योदयः स्यात् । संहतत्वाविशेषात् घटादेरपि चैतन्यप्रसङ्गः । तस्मात् अन्य एव चेतनः । एतत् अपि पूर्वे प्रसङ्गानुप्रसङ्गेन व्यवस्थितम् इति त्वरितं तेन न पुनः उक्तम् । सांहत्ये च इति वीप्साध्यायपरिसमाप्तौ ॥ १३० ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ
परपक्षनिर्णयाध्यायः पञ्चमः ।

---

## निर्गुणत्वमात्मनोऽसङ्गादिश्रुतेः ॥ १० ॥

विशेषगुणनिषेधात् सामान्यगुणस्वीकारः। तथा च असङ्गादिश्रुतिविरोधः स्यात् ॥ १० ॥

यदि असङ्गः पुरुषः, कथं धर्मात् स्वर्गः अधर्मात् नरकः इत्यत आह ॥

## परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ॥ ११ ॥

प्रकृतिधर्मत्वे अपि प्रकृतिपुरुषाविवेकात् तच्छायापत्त्या आत्मनः स्वर्गादिप्राप्तिः इति अभिमानः ॥ ११ ॥

अविवेकः किं सादिः अनादिः वा इत्यत आह ॥

## अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥१२॥

यदि सादिः अविवेकः भवेत्, तदुत्पत्तेः पूर्वं मोक्षः स्यात् तदुत्पत्तौ च बन्धः इति मुक्तस्य बन्धः इति एकः दोषः। अविवेकप्रागभावस्य अपि विद्यमानत्वात् मुक्तिसिद्धौ अविवेकनाशार्थम् अनुष्ठानं व्यर्थम् इति द्वितीयः दोषः ॥ १२ ॥

अविवेकः अनादित्वात् किं नित्यः अनित्यः वा इत्यत आह ॥

## न नित्यः स्यादात्मवदन्यथानुच्छित्तिः ॥१३॥

नित्यः द्विधा, कूटस्थनित्यः आत्मा, परिणामिनित्या प्रकृतिः। न द्वयम् अपि अविवेकः, किन्तु अनित्यः एव नाशात्। अन्यथा नित्यत्वे अनुच्छित्तिः। आत्मवत् इति उपलक्षणं, प्रकृतिवत् इति अपि द्रष्टव्यम् ॥ १३ ॥

अविवेकनाशः केन इत्यत आह ॥

## प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥१४॥

यथा ध्वान्तस्य नाशकः प्रकाशः इति ॥ १४ ॥

अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥ ५ ॥

सुखोत्कर्षस्य अपि अस्थिरत्वात् न कृतकृत्यता। अत्यन्तदुःखनिवृत्तिस्तु तथा अपुनरावृत्तेः ॥ ५ ॥

सुखाभावस्य अपि विद्यमानत्वात् पुरुषार्थत्वम् इत्यत आह।

यथा दुःखात् क्लेशः पुरुषस्य, न तथा सुखादभिलाषः ॥ ६ ॥

सुखे दुःखस्य अनवस्थानात्। यदि सुखे अति दुःखम् अवश्यं भवेत् न सुखम् अभिलषेत्। तस्मात् दुःखबहुलत्वात् दुःखनिवृत्तिः एव पुरुषार्थः ॥ ६ ॥

सुखस्य दुर्लभत्वम् आह।

कुत्रापि कोऽपि सुखी न ॥ ७ ॥

अयम् एव विशेषताम् ॥ ७ ॥

अवश्यम् एव वनितादीनां सुखहेतुत्वम् इत्यत आह।

तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः ॥ ८ ॥

धनादीनाम् अर्जने व्ययादौ च दुःखम् इति अनुभवनम् एव प्रमाणम् इति ॥ ८ ॥

सुखम् एव परमपुरुषार्थः, न तु अभावः इत्यत आह।

सुखलाभाभावादपुरुषार्थत्वमिति चेन्न द्वैविध्यात् ॥ ९ ॥

रागिणां सुखं वीतरागाणां दुःखाभावः इति ॥ ९ ॥

निर्गुणत्वोक्तिः श्रुतिः इत्यत आह।

## निर्गुणत्वमात्मनोऽसङ्गादिश्रुतेः ॥ १० ॥

विशेषगुणनिषेधात् सामान्यगुणस्वीकारः। तथा च असङ्गादिश्रुतिविरोधः स्यात् ॥ १० ॥

यदि असङ्गः पुरुषः, कथं धर्मात् स्वर्गः अधर्मात् नरकः इत्यत्र आह ॥

## परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ॥ ११ ॥

प्रकृतिधर्मत्वे अपि प्रकृतिपुरुषाविवेकात् तच्छायापत्त्या आत्मनः स्वर्गादिप्राप्तिः इति अभिमानः ॥ ११ ॥

अविवेकः किं सादिः अनादिः वा इत्यत्र आह ॥

## अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥१२॥

यदि सादिः अविवेकः भवेत्, तदुत्पत्तेः पूर्वं मोक्षः स्यात् तदुत्पत्तौ च बन्धः इति मुक्तस्य बन्धः इति एकः दोषः। अविवेकप्रागभावस्य अपि विद्यमानत्वात् मुक्तिसिद्धौ अविवेकनाशार्थम् अनुष्ठानं व्यर्थम् इति द्वितीयः दोषः ॥ १२ ॥

अविवेकः अनादित्वात् किं नित्यः अनित्यः वा इत्यत्र आह ॥

## न नित्यः स्यादात्मवदन्यथानुच्छित्तिः ॥१३॥

नित्यः द्विधा, कूटस्थनित्यः आत्मा, परिणामिनित्या प्रकृतिः। न द्वयम् अपि अविवेकः, किन्तु अनित्यः एव नाशात्। अन्यथा नित्यत्वे अनुच्छित्तिः। आत्मवत् इति उपलक्षणं, प्रकृतिवत् इति अपि द्रष्टव्यम् ॥ १३ ॥

अविवेकनाशः केन इत्यत्र आह ॥

## प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥१४॥

यथा ध्वान्तस्य नाशकः प्रकाशः इति ॥ १४ ॥

बन्धे कः नाशकः इत्यत आह ।

**अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् ॥ १५ ॥**

अव्यभिचारात् विवेक एव नाशक इति । १५ ।

किम् अविवेकात् बन्ध आत्मा अत अन्यत् अपि बन्ध
कारणम् अस्ति इत्यत आह ।

**प्रकारान्तरासम्भवादविवेक एव बन्धः ॥ १६ ॥**

स्पष्टम् । १६ ।

मुक्ते कार्याभावात् नाशे पुनः बन्धः इत्यत आह ।

**न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः ॥ १७ ॥**

श्रुतिश्च 'आत्मा ज्ञातव्यः प्रकृतितः विवेक्तव्यः न पुनः
आवर्तते' इति । स्मृतिश्च 'ज्ञानकार्यमेव ज्ञानात् दुःख
निवृत्तिश्च अभावरूपा इति । १७ ।

विपक्षे दोषम् आह ।

**अपुरुषार्थत्वमन्यथा ॥ १८ ॥**

विवेकः पुरुषार्थः । १८ ।

सूत्रान्तरम् आह ।

**अविशेषापत्तिरुभयोः ॥ १९ ॥**

संसारिमुक्तयोः उभयोः अविशेषात् । १९ ।

व्याध्यादयः योगान्तरायाः । तथा च पतञ्जलिः 'व्याधि
स्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वान
वस्थितत्वानि चित्तविक्षेपास्ते अन्तरायाः' । व्याधिः ज्वरादिः,
स्त्यानम् अकर्मण्यता संशयः उभयकोटिस्पृग्ज्ञानं प्रमादः
समाधौ अनवधानम्, आलस्यं कायगुरुत्वं अविरतिः विषय-

दृष्या, भ्रान्तिदर्शनं मिथ्याज्ञानं, अलब्धभूमिकत्वं समाधि-भूमेः अलाभः । अनवस्थितत्वं लब्धभूमेः मनसि भ्रंशित्वम् । मुक्तौ किम् एषा ध्वंसमात्रं, धर्मान्तरप्राप्तिः वा इत्यत्र आह ॥

मुक्तिरन्तरायध्वस्तेर्न परः ॥ २० ॥

धर्मान्तरपक्षे कूटस्थत्वभङ्गः इति ॥ २० ॥

अभ्युपगम्य अपि आह ॥

तत्राप्यविरोधः ॥ २१ ॥

भवतु धर्मयोगः, तथापि न काचित् क्षतिः । मुक्तौ अनावृत्तिः उक्ता, सा धर्मान्तरयोगे अपि अस्ति इति ॥ २१ ॥

श्रवणमनननिदिध्यासनं किं सर्वपुरुषसाधारणं न वा इत्यत्र आह ॥

अधिकारित्रैविध्यान्न नियमः ॥ २२ ॥

त्रिविधाः तु अधिकारिणः मृदुमध्याधिमात्राः । अधिमात्रस्य श्रवणमात्रात् मुक्तिः, मध्यमस्य द्वाभ्यां, मन्दस्य त्रिभिः । न सर्वं सर्वस्य ॥ २२ ॥

पक्षान्तरम् आह ॥

दार्ढ्यार्थमुत्तरेषाम् ॥ २३ ॥

उत्तरेषां मन्दानां दार्ढ्यार्थं साधनत्रयम् उक्तम् । श्रुतिः अपि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यश्च' इति ॥ २३ ॥

स्वस्तिकादीनां मध्ये किम् आसनम् अनुष्ठेयम् इत्यत्र आह ॥

स्थिरसुखमासनमिति न नियमः ॥ २४ ॥

स्थैर्यार्थे सुखार्थे च साधनानुष्ठानं तद् एव यत्तु ध्याना-ङ्गत्वात् इति ॥ २४ ॥

एकाग्रतया विषयचिन्तनं ध्यानं निर्विषयं वा मनः ध्यानम् इत्यत आह ।

ध्यानं निर्विषयं मनः ॥ २५ ॥

समाधौ एव ध्यानमन्यद् इति ॥ २५ ॥

वृत्तिनिरोधतुल्यत्वे सुषुप्तिसमाध्योः को विशेषः इत्यत आह ।

उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः ॥ २६ ॥

उपरागः विषयवासना । तन्निरोधः समाधौ इति विशेषः ॥ २६ ॥

निःसङ्गत्वात् आत्मनः उपरागाभावात् सर्वदा मुक्तिः इत्यत आह ।

निःसङ्गेऽप्युपरागोऽविवेकात् ॥ २७ ॥

प्रकृतिपुरुषाविवेकात् प्रकृत्युपरागेण आत्मोपरागः इति अभिमानः ॥ २७ ॥

उपरागः अपि न तात्त्विकः इत्यत आह ।

जपास्फटिकयोरिव नोपरागः, किन्त्वभिमानः ॥ २८ ॥

तयोः संसर्गात् उपरागः मुख्यः । आत्मनः तु असंसर्गात् न उपरागः, किन्तु अभिमानः आत्मनि अहङ्काराध्यासात् उपरागाभासः ॥ २८ ॥

कथम् अभिमाननाशः इत्यत आह ।

**ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ॥ २९ ॥**

आदिशब्दात् समाधिग्रहणम् ॥ २९ ॥

एकदेशिमतम् उक्त्वा स्वमतम् आह ॥

**लयविक्षेपयोर्व्यावृत्त्येत्याचार्य्याः ॥ ३० ॥**

लयः सुषुप्तिः, विक्षेपः जागरितम् । तयोः व्यावृत्त्या अहं-मानविनाशः ॥ ३० ॥

गुहादिस्थानेषु केषु ध्यानादयः कर्त्तव्या इत्यत्र आह ॥

**न स्थाननियमश्चित्तप्रसादात् ॥ ३१ ॥**

यत्र चित्तप्रसादः न भवति, तत्र न कर्त्तव्यम् अनुष्ठानम् ॥ ३१ ॥

अहङ्कारादीनाम् उपादानत्वम् अस्तु, कृतं प्रकृत्या इत्यत्र आह ॥

**प्रकृतेराद्योपादानतान्येषां कार्य्यत्वश्रुतेः ॥ ३२ ॥**

अहङ्कारादीना कार्य्यत्वश्रुतेः तेषाम् अपि कारणं प्रकृतिः इति प्रसङ्गात् आवेदितम् ॥ ३२ ॥

प्रकृतिपुरुषयोः पूर्वकालभावित्वाविशेषात् कः कारणम् इत्यत्र आह ॥

**नित्यत्वेऽपि नात्मनो योग्यत्वाभावात् ॥ ३३ ॥**

गुणवत्त्वसंसर्गित्वे कारणयोग्यता, सा च आत्मनि न अस्ति इति प्रकृतिः कारणम् ॥ ३३ ॥

आत्मनः चेतृत्वात् भोक्तृत्वादि युज्यते, न जडस्य प्रधानस्य इत्यत्र आह ॥

**श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥ ३४ ॥**

स्पष्टम् ॥ ३४ ॥

तन्मात्राणां महाभूतकार्य्यत्वदर्शनात् कथं प्रकृतेः कारणत्वम् इत्यत आह ।

**पारम्पर्य्येऽपि प्रधानानुवृत्तिरणुवत् ॥ ३५ ॥**

यथा घटादेः द्व्यणुकारब्धत्वेऽपि पारम्पर्य्येण परमाणूपादानत्वं तथात्रापि इति ॥ ३५ ॥

प्रकृतिः व्यापिका न वा इत्यत आह ।

**सर्वत्र कार्य्यदर्शनाद्विभुत्वम् ॥ ३६ ॥**

स्पष्टम् ॥ ३६ ॥

विपक्षे दोषम् आह ।

**गतियोगेऽप्याद्यकारणताहानिरणुवत् ॥ ३७ ॥**

गतिः क्रिया । तद्योगः यद्यपि तत्र अभ्युपगमः । प्रकृतेः गतिमत्त्वे कार्य्यत्वं परमाणुवत्, न तु आद्यकारणता ॥ ३७ ॥

प्रकृतेः उपादानत्वे द्रव्यत्वम् उपादानत्वात् तदन्तर्भावः स्यात् इत्यत आह ।

**प्रसिद्धाधिक्यं प्रधानस्य, न नियमः ॥ ३८ ॥**

प्रसिद्धद्रव्येभ्यः अधिकं प्रधानं अधिकलक्षणात् पदार्थः । उपादानकारणता च न समवायिकारणता किन्तु प्रधानता वैशेषिकसमवायस्य अनभ्युपगमात् ॥ ३८ ॥

प्रकृतिः किं गुणात्मिका गुणधर्मिणी वा । अत आह ।

**सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥ ३९ ॥**

तादात्म्यात् ॥ ३९ ॥

उपभोगार्थं प्रवृत्तिः दृष्टा, न तु जडस्य उपभोग इत्यत्र आह ॥

**अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ॥ ४० ॥**

कृतव्याख्यानम् एतत् तृतीये अध्याये 'प्रधान' इत्यादि-सूत्रे ॥ ४० ॥

प्रकृते. एकत्वात् कथं सृष्टिवैचित्र्यम् इत्यत्र आह ॥

**कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ॥ ४१ ॥**

उपादानाभेदे अपि निमित्तभेदेन भेद, यथा सुवर्णाभेदे अपि मुकुटग्रैवेयकादिभेद' ॥ ४१ ॥

कथ सृष्टिप्रलयौ इत्यत्र आह ॥

**साम्यवैषम्याभ्यां कार्य्यद्वयम् ॥ ४२ ॥**

साम्यात् प्रकृते' सदृशपरिणामात् प्रलय' । वैषम्यात् प्रकृते महदादिभावेन विसदृशपरिणामात् सृष्टि' ॥ ४२ ॥

प्रलयम् आह ॥

**विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥ ४३ ॥**

यथा लोक बन्धमोक्षार्थं यतते, मुक्तबन्ध च कृतार्थत्वात् उदास्ते, तथा प्रधानम् अपि ॥ ४३ ॥

व्यापकत्वात् प्रकृतिपुरुषयो' सम्बन्धो अस्ति एव इति मोक्षे अपि भोगप्रसङ्ग इत्यत्र आह ॥

**नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात् ॥ ४४ ॥**

त्वात्। 'नेदं जगत्' इति प्रत्ययाभावात् बाधकं च न अस्ति॥ सङ्क्षेपात् जगत् उच्यते। ऊर्ध्वं भूर्भुवः स्वर्महर्जनस्तपः सत्यम् इति। अथ महातलरसातलतलातलपातालसुतलवितलातला इति। मध्ये जम्बुद्वीपः। तन्मध्ये सुमेरुः। तत्पूर्वादिचतुर्दिक्षु मन्दरगन्धमादनविपुलसुपार्श्वनामानः विष्टम्भपर्वताः। मेरुदक्षिणे भारतवर्षहिमालयपर्वतकिंपुरुषवर्षहेमकूटपर्वतहरिवर्षनिषधपर्वताः। मेरोः उत्तरे कुरुवर्षशृङ्गिपर्वतहिरण्यकवर्षश्वेतपर्वतरम्यकवर्षनीलपर्वताः। मेरुपूर्वे भद्राश्ववर्षमाल्यवत्पर्वतः। मेरुपश्चिमे केतुमालवर्षगन्धमादनपर्वतः। मेरोः अधः इलावृतवर्षः। लक्षयोजनः जम्बुद्वीपः। तद्वेष्टनेन तत्तुल्यः लवणसमुद्रः। तद्वेष्टनेन तद्द्विगुणः शाकद्वीपः। तद्वेष्टनेन तत्तुल्यः इक्षुरससमुद्रः। तद्वेष्टनेन तद्द्विगुणः कुशद्वीपः। तद्वेष्टनेन तत्तुल्यः सुरासमुद्रः। तद्वेष्टनेन तद्द्विगुणः क्रौञ्चद्वीपः। तद्वेष्टनेन तत्तुल्यः घृतसमुद्रः। तद्वेष्टनेन तद्द्विगुणः शाल्मलिद्वीपः। तद्वेष्टनेन तत्तुल्यः दधिसमुद्रः। तद्वेष्टनेन तद्द्विगुणः प्लक्षद्वीपः। तद्वेष्टनेन तत्तुल्यः दुग्धसमुद्रः। तद्वेष्टनेन तद्द्विगुणः पुष्करद्वीपः। तद्वेष्टनेन तत्तुल्यः स्वादूदकसमुद्रः। लोकालोकपर्वतवेष्टनेन ब्रह्माण्डकटाहेन सर्वतः परिवृतं जगत् इति॥ ५२॥

पूर्वोक्तम् अपि शिष्यहिततया पुनः प्रतिपादयति॥

**प्रकारान्तरासम्भवात् सदुत्पत्तिः॥ ५३॥**

प्रकारान्तरं च पूर्वम् एव दूषितम्॥ ५३॥

अहं करोमि इति प्रत्ययात् किम् अहङ्कारः कर्त्ता, अथ अहङ्कारशब्देन आत्मा उच्यते, सः एव कर्त्ता, इत्यत्र आह॥

**अहङ्कारः कर्त्ता, न पुरुषः॥ ५४॥**

भवेत् एवं यदि चक्षुषा प्रधानस्य उपलभ्यमानम् उपभोगनिमित्तं स्यात्। न च एवं किन्तु उपभोग्यनिमित्त उपभोगः। स च मोक्षे न भवति इति ॥ ४४ ॥

एक एव आत्मा। तथा च

एकमेव परं ब्रह्म सर्वमन्यद्विकल्पितम्।
को मोक्षः कस्तदा योगः एकत्वमनुपश्यतः ॥

एतत् अपाकरोति ॥

पुरुषबहुत्वं व्यवस्थातः ॥ ४५ ॥

एतत् प्रथमाध्याये जन्मादिसूत्रे वर्णितम्। तथा च

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥ ४५ ॥

उपाधिभेदात् नानात्वं भविष्यति इत्यत आह ॥

उपाधिश्चेत्तत्सिद्धौ पुनर्द्वैतम् ॥ ४६ ॥

तत्सिद्धौ भेदसिद्धौ। उपाधिमिथ्यात्वे कुतः भेदसिद्धिः। सत्यत्वे तु तत एव पुनः द्वैतम् ॥ ४६ ॥

दूषणान्तरम् आह ॥

द्वाभ्यामपि प्रमाणविरोधः ॥ ४७ ॥

सत्यासत्याभ्याम्। सत्यत्वे अद्वैतसिद्धान्तहानिः। असत्यत्वे कुतः नानात्वव्यवस्था ॥ ४७ ॥

न अद्वैतश्रुतिविरोधः द्वैतवादिनः इत्यत आह।

द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ॥ ४८ ॥

अद्वैतश्रुतेः सामान्यपरत्वात् प्रशंसापरत्वात् वा अन्यार्थत्वे न विरोधः। उपाधिसत्यत्वे च न द्वैतहानिः इति न अस्ति विरोधः। तस्मात् न पूर्वम् आत्मैकत्वे न उत्तरं च श्रुति विरोधः। अद्वैतत्वे प्रमाणासत्त्वात् न तत्सिद्धिः इति भिन्नः अस्ति इत्यर्थः ॥ ४८ ॥

न प्रमाणाभावः, स्वप्रकाशम् एव प्रमाणम् अस्ति इत्यत्र आह ॥

**प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः ॥ ४९ ॥**

व्यक्तम् ॥ ४९ ॥

दूषणान्तरम् आह ॥

**जड़व्यावृत्तौ जड़ं प्रकाशयति चिद्रूपः ॥ ५० ॥**

जडात् अन्यः चिद्रूपः जडं प्रकाशयति। जडव्यावृत्त-त्वेन प्रकाशरूपत्वं, न तु प्रकाशधर्मत्वम् उक्तम्। अत एव 'स एष नेति नेति' इति उच्यते, न तु विधिमुखतया इति ॥ अथ अलौकिकप्रकाशरूपत्वम्। तत्र व्याप्तिग्रहणाभावात् दृष्टान्ताभावः ॥ अथ योगिगम्यं तत्। असम्प्रज्ञातयोगिनः ज्ञानचेष्टाभावात् लिङ्गं न अस्ति। सम्प्रज्ञातयोगिनः च वचन-चेष्टादि लिङ्गं, तेन च लौकिकः एव अर्थः अनुमीयते। न च स अपि अनुभवरूपं चैतन्यं प्रतिपादयितुं शक्नोति। तथा च

इक्षुक्षीरगुडादीनां माधुर्य्यस्यान्तरं महत्।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥

एवम् अचेतनव्यावृत्तत्वात् चेतनः इति उच्यते, न तु चितिसमवायः चैतन्यरूपत्वं वा, असम्प्रज्ञातावस्थायां निरुद्ध-वृत्तित्वेन अपि 'अलौकिकचैतन्यम्' इति व्यवहारान्यथा-सिद्धेः। सम्प्रज्ञातावस्थायां तु वृत्तिज्ञानेन एव 'चैतन्यम्' इति

त्वात्। 'नेदं जगत्' इति प्रत्ययाभावात् बाधकं च न अस्ति॥ सङ्क्षेपात् जगत् उच्यते। ऊर्ध्वं भूर्भुवः स्वर्महर्जनस्तपः सत्यम् इति। अधः महातलरसातलतलातलपातालसुतलवितलातला इति। मध्ये जम्बुद्वीपः। तन्मध्ये सुमेरुः। तत्पूर्वादिचतुर्दिक्षु मन्दरगन्धमादनविपुलसुपार्श्वनामानः विष्टम्भपर्वताः। मेरुदक्षिणे भारतवर्षहिमालयपर्वतकिंपुरुषवर्षहेमकूटपर्वतहरिवर्षनिषधपर्वताः। मेरोः उत्तरे कुरुवर्षशृङ्गिपर्वतहिरण्यकवर्षश्वेतपर्वतरम्यकवर्षनीलपर्वताः। मेरुपूर्वं भद्राश्ववर्षमाल्यवत्पर्वतः। मेरुपश्चिमे केतुमालवर्षगन्धमादनपर्वतः। मेरोः अधः इलावृतवर्षः। लक्षयोजनः जम्बुद्वीपः। तद्वेष्टनेन तत्तुल्यः लवणसमुद्रः। तद्वेष्टनेन तद्द्विगुणः शाकद्वीपः। तद्वेष्टनेन तत्तुल्यः इक्षुरससमुद्रः। तद्वेष्टनेन तद्द्विगुणः कुशद्वीपः। तद्वेष्टनेन तत्तुल्यः सुरासमुद्रः। तद्वेष्टनेन तद्द्विगुणः क्रौञ्चद्वीपः। तद्वेष्टनेन तत्तुल्यः घृतसमुद्रः। तद्वेष्टनेन तद्द्विगुणः शाल्मलिद्वीपः। तद्वेष्टनेन तत्तुल्यः दधिसमुद्रः। तद्वेष्टनेन तद्द्विगुणः प्लक्षद्वीपः। तद्वेष्टनेन तत्तुल्यः दुग्धसमुद्रः। तद्वेष्टनेन तद्द्विगुणः पुष्करद्वीपः। तद्वेष्टनेन तत्तुल्यः स्वादूदकसमुद्रः। लोकालोकपर्वतवेष्टनेन ब्रह्माण्डकटाहेन सर्वतः परिवृतं जगत् इति॥ ५२॥

पूर्वोक्तम् अपि शिष्यहिततया पुनः प्रतिपादयति॥

**प्रकारान्तरासम्भवात् सदुत्पत्तिः॥ ५३॥**

प्रकारान्तरं च पूर्वम् एव दूषितम्॥ ५३॥

अथ करोमि इति प्रत्ययात् किम् अहङ्कारः कर्ता, अथ अहङ्कारशब्देन आत्मा उच्यते, स एव कर्ता, इत्यत्र आह॥

**अहङ्कारः कर्ता, न पुरुषः॥ ५४॥**

प्रथमभावित्वात् श्रवणस्य पारम्पर्य्येण कारणत्वसिद्धौ दिमुक्तिश्रुति ॥ ५८ ॥

यथा च व्यापकत्वात् प्रकृतेः जगत्कारणत्वं, एवं व्यापकत्वात् आत्मनः सर्वदेशे उपभोगप्रसङ्ग इत्यत्र आह ॥

## गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेश-काललाभो व्योमवत् ॥ ५९ ॥

यथा घटाद्युपाधियोगात् घटे गच्छति 'घटाकाशं गच्छति' इति ज्ञानं, तथा देहावच्छेदेन तद्गत्या आत्मगतिः इति। कर्मवशात् यत्र देशे उपभोगः तत्र देहगमनात् आत्मनः भोगलाभः। यदि आत्मा व्यापकः चिद्रूपः, सर्वदा सर्वत्र सर्वार्थेषु समकालं ज्ञानं प्रसज्येत, न च एवं दृश्यते। तत् न। भवेत् एव, यदि आत्मा व्यापकस्वरूपेण वृत्तिज्ञानं जनयति। न च एवं, किन्तु देहादिपरिच्छिन्नः एव। यथा सूर्यः प्रकाशस्वभावः अपि मेरोः दक्षिणस्थः न उत्तरभागं प्रकाशयति, उत्तरस्थः न दक्षिणभागं, अव्यापकत्वात्। यदा तु ज्ञानादिना दग्धकर्माशयत्वेन नष्टदेहादिसङ्घातः नीरजस्तमस्कः व्यापकः भवति, न तदा वृत्तिज्ञानं जनयति अविकारित्वात्, किन्तु स्वयम् एव जगत्प्रकाशस्वरूपः। यथा च आकाशं व्यापकं प्रादेशिकधूमादिसम्बन्धेन न मलिनं भवति, किन्तु घटाद्यवच्छिन्नं सत् घटाद्युदरवर्त्ति सर्वं मलिनम् इति अनुमन्यते। तत्र अपि न आकाशं मलिनं, तस्य लेपाभावात्, किन्तु अविवेचकानां मिथ्याभिमानमात्रं, घटभङ्गे तथा अदर्शनात्। तथा आत्मा व्यापकः, न अस्य धर्मादिसम्बन्धः, न अपि ज्ञानं, किन्तु शरीरावच्छेदेन मरुदग्नियोगवत् जीवसम्बन्धेन मनोयोगात् जीवात्मा इति उच्यते। मनसा अविनाभूता प्रकृतिः

निराश्रयस्य अदृष्टस्य असामर्थ्यात् देहासम्बद्धत्वेन न कार्य्यकरणं, यथा जलस्य न अङ्कुरजनकत्वम्। आदिशब्दात् अग्ने ग्रहणम् ॥ ६१ ॥

किमाश्रया धर्मादयः कार्य्यजनकाः इत्यत्र आह ॥

निर्गुणत्वात् तदसम्भवादहङ्कारधर्मा ह्येते ॥ ६२ ॥

निर्गुणत्वात् आत्मनः तद्धर्मत्वासम्भवात् एते धर्मादयः अहङ्कारधर्माः। कार्य्यकारणयोः अभेदात् बुद्धिधर्मा एव अहङ्कारधर्माः इति उक्तम् ॥ ६२ ॥

किमात्मनः स्वरूपेण जीवत्वम् अन्यथा वा इत्यत्र आह ॥

विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥ ६३ ॥

स्वरूपेण जीवत्वे कर्त्तृत्वात् भोक्तृत्वात् कौटस्थ्यहानिः। अन्वयव्यतिरेकात् च। देहावच्छेदेन वाय्वग्निसंयोगात् इन्द्रियसंयोगेन विशिष्टस्य जीवत्वम् ॥ ६३ ॥

ऐश्वर्य्यशालित्वात् जीवात्मा एव ईश्वरः, सः एव जगत् निर्मास्यति। तथा च

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन। तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

इत्यत्र आह ॥

अहङ्कारकर्त्त्रधीना कार्य्यसिद्धिर्नेश्वराधीना प्रमाणाभावात् ॥ ६४ ॥

प्रमाणाभावात् इति जगदुपादानज्ञानाभावात्। अव्यापकत्वात् अनेकेश्वरकल्पना अपि स्यात् ॥ ६४ ॥

एकदेशिमतम् आह ॥

**लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य्यः ॥ ६९ ॥**

लयनात् लिङ्गम् इति सूक्ष्मम् आतिवाहिकशरीरम्। यावत् स्थूलशरीरे सूक्ष्मशरीरस्य गमनम् अस्ति, तावत् स्वस्वामिसम्बन्धात् बन्धः इति उच्यते ॥ ६९ ॥

स्वमतम् आह ॥

**यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥ ७० ॥**

यत् वा तत् वा इति कर्मक्षयात् वा ज्ञानात् वा अन्यत वा इति, स्वस्वामिसम्बन्धोच्छित्त्या संसारोच्छित्ति पुरुषार्थ ॥ तदुच्छित्ति पुरुषार्थं इति वीप्साध्यायपरिसमाप्तौ ॥ ७० ॥

एष सत्कार्य्यसिद्धान्तः पूर्वमेव निरूपितः।
तन्त्रतः प्रतिपाद्यत्वान्न हि स्यात् पुनरुक्तता ॥

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ षष्ठोऽध्यायः ॥

समाप्तश्चायं ग्रन्थ ॥

वृत्तिः कृतानिरुद्धेन सांख्यसूत्रस्य धीमता।
मूढसत्त्वविवेकाय, आत्मनश्च विमुक्तये ॥

---

# सांख्यकारिका।



श्रीईश्वरकृष्णेन विरचिता।

श्रीगौडपादकृतभाष्यसहिता।

पण्डितकुलपतिना बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृता प्रकाशिता च।

द्वितीयसंस्करणम्।

कलिकातानगरे

सरस्वतीयन्त्रे मुद्रिता।



पण्डितकुलपति

श्रीजीवानन्दविद्यासागर बि, ए,

PANDIT JIBANANDA VIDYASAGAR B. A.

Superintendent Free Sanskrit College, Calcutta.

# सांख्यकारिका।



दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ।

---

कपिलाय नमस्तस्मै येनाविद्योदधौ जगति मग्ने।
कारुण्यात् साङ्ख्यमयी नौरिव विहिता प्रतरणाय॥
अल्पग्रन्थं स्पष्टं प्रमाणसिद्धान्तहेतुभिर्युक्तम्।
शास्त्रं शिष्यहिताय समासतोऽहं प्रवक्ष्यामि॥

दुःखत्रयेति। अस्या आर्य्याया उपोद्घातः क्रियते॥ इह भगवान् ब्रह्मसुतः कपिलो नाम तद् यथा।

सनकश्च सनन्दश्च तृतीयश्च सनातनः।
आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा।
इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षयः॥

कपिलस्य सहोत्पन्ना धर्मो ज्ञानं वैराग्यमैश्वर्य्यञ्चेति। एवं स उत्पन्नः सन् अन्धतमसि मज्जज्जगदालोक्य संसारपारम्पर्य्येण सत्कारुण्यो जिज्ञासमानाय आसुरिगोत्राय ब्राह्मणाय इदं पञ्चविंशतितत्त्वानां ज्ञानम् उक्तवान् यस्य ज्ञानाद् दुःखक्षयो भवति

पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे वसेत्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥

तदिदमाहुः। दुःखत्रयाभिघाताज्जिज्ञासेति। तत्र दुःखत्रयम्। आध्यात्मिकम्। आधिभौतिकम्। आधिदैविकञ्चेति॥ तत्राध्यात्मिकं द्विविधं शारीरं मानसं चेति। शारीरं वातपित्तश्लेष्मविपर्य्ययकृतं ज्वरातीसारादि। मानसं प्रियवियोगाप्रियसंयोगादि। आधिभौतिकं चतुर्विधं भूतग्रामनिमित्तं मनुष्यपशुमृगपक्षिसरीसृपदंशमशकयूकामत्कुणमत्स्यमकर-

**दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥**

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।**

---

स्थावरेभ्यो जरायुजाण्डजस्वेदजोद्भिज्जेभ्यः सकाशादुपजायते । आधिदैविकम् । देवानामिदं दैविकम् । दिवः प्रभवतीति वा दैवं तदधिकृत्य यदुपजायते शीतोष्णवातवर्षाशनिपातादिकम् ॥

एवं यदा दुःखत्रयाभिघाताज्जिज्ञासा कार्या क्व । तदभिघातके हेतौ । तस्य दुःखत्रयस्य अभिघातको योऽसौ हेतुस्तत्रेति । दृष्टे सापार्था चेत् । दृष्टे हेतौ दुःखत्रयाभिघातके सा जिज्ञासाऽपार्था चेद् यदि । तत्राध्यात्मिकस्य द्विविधस्यापि आयुर्वेदशास्त्रक्रियया प्रियसमागमाप्रियपरिहारकटुतिक्तकषायादिक्वाथादिभिर्दृष्ट एव आध्यात्मिकोपायः । आधिभौतिकस्य रक्षादिनाऽभिघातो दृष्टः । दृष्टे सा अपार्था चेदेवं मन्यसे न । एकान्तात्यन्ततोऽभावात् । यत एकान्ततोऽवश्यम् अत्यन्ततो नित्यं दृष्टेन हेतुनाऽभिघातो न भवति तस्मादन्यत्र एकान्तात्यन्ताभिघातके हेतौ जिज्ञासा विविदिषा कार्येति ॥ १ ॥

यदि दृष्टादन्यत्र जिज्ञासा कार्या ततोऽपि नैव यत आनुश्रविको हेतुः दुःखत्रयाभिघातकः । अनुश्रूयत इत्यनुश्रवस्तत्र भवः आनुश्रविकः स च आगमात् सिद्धः । यथा

अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् ।
किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृतमर्त्य च ॥

कदाचिदिन्द्रादीनां देवानां कल्प आसीत् । कथं वयममृता अभूमेति विचार्यास्माद् यस्मादपाम सोमं पीतवन्तः सोमं तस्मादमृता अभूम अमरा भूतवन्त इत्यर्थः किञ्च अगन्म

तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

---

ज्योतिः गतवन्तः लब्धवन्तः ज्योतिः स्वर्गमिति। अविदाम देवान् दिव्यान् विदितवन्तः। एवं च किमूनमस्मान् कृणवदराति, नूनं निश्चितं किम् अरातिः शत्रुरस्मान् कृणवत् कर्त्तेति किमु धूर्त्तिरमृतमर्त्यस्य धूर्त्तिर्जरा हिंसा वा किं करिष्यति अमृतमर्त्यस्य। अन्यच्च वेदे श्रूयते आत्यन्तिकं फलं पशुवधेन। सर्वांल्लोकान् जयति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां तरति यो योऽश्वमेधेन यजत इति। एकान्तात्यन्तिके एव वेदोक्ते यथार्थैव जिज्ञासा इति न। उच्यते। दृष्टवदानुश्रविक इति दृष्टेन तुल्यो दृष्टवत्। कोऽसौ आनुश्रविकः कस्मात् स यस्मादविशुद्धिक्षयातिशययुक्तः। अविशुद्धियुक्तः पशुघातात् तथा चोक्तम्।

षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य वचनादूनानि पशुभिस्त्रिभिः॥

यद्यपि श्रुतिस्मृतिविहितो धर्मस्तथापि मिश्रीभावादविशुद्धियुक्त इति। यथा

बहूनीन्द्रसहस्राणि देवानां च युगे युगे।
कालेन समतीतानि कालो हि दुरतिक्रमः॥

एवमिन्द्रादिनाशात् क्षययुक्तः। तथाऽतिशयो विशेषस्तेन युक्तः। विशेषगुणदर्शनादितरस्य दुःखं स्यादिति। एवमानुश्रविकोऽपि हेतुर्दृष्टवत्॥ कस्तर्हि श्रेयानिति चेत्। उच्यते। तद्विपरीतः श्रेयान् ताभ्यां दृष्टानुश्रविकाभ्यां विपरीतः श्रेयान् प्रशस्यतर इति। अविशुद्धिक्षयातिशयायुक्तत्वात्। स कथमित्याह। व्यक्ताव्यक्तज्ञविज्ञानात् तत्र व्यक्तं महदादि-बुद्धिरहङ्कारः पञ्चतन्मात्राणि एकादशेन्द्रियाणि पञ्चमहा-

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।

पुरुषः ॥ एवमेषा व्यक्ताव्यक्तज्ञानां त्रयाणां पदार्थाना कै कियद्भिः प्रमाणैः केन कस्य वा प्रमाणेन सिद्धिर्भवति । इह लोके प्रमेयवस्तु प्रमाणेन साध्यते यथा प्रस्थादिभिर्व्रीहयस्तुलया चन्दनादि । तस्मात् प्रमाणमभिधेयम् ॥ ३ ॥

दृष्टं यथा श्रोत्रं त्वक् चक्षुर्जिह्वा घ्राणमिति पञ्च बुद्धीन्द्रियाणि शब्दस्पर्शरूपरसगन्धा एषा पञ्चाना पञ्चैव विषया यथासंख्य शब्दं श्रोत्र गृह्णाति, त्वक् स्पर्शं, चक्षु रूप, जिह्वा रस, घ्राण गन्धमिति । एतद् दृष्टमित्युच्यते प्रमाणम् । प्रत्यक्षेणानुमानेन वा योऽर्थो न गृह्यते स आप्तवचनाद् ग्राह्यः । यथेन्द्रो देवराजः उत्तराः कुरवः स्वर्गेऽप्सरस इत्यादि । प्रत्यक्षानुमानाग्राह्यमथाप्तवचनाद् गृह्यते । अपिचोक्तम् ।

आगमो ह्याप्तवचनमाप्त दोषक्षयाद्विदुः ।
क्षीणदोषोऽनृत वाक्य न ब्रूयाद्धेत्वसम्भवात् ॥
स्वकर्मण्यभियुक्तो य. सङ्गद्वेषविवर्जित' ।
पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेय' स तादृश' ॥

एतेषु प्रमाणेषु सर्वप्रमाणानि सिद्धानि भवन्ति । षट् प्रमाणानि जैमिनि । अथ कानि तानि प्रमाणानि । अर्थापत्ति. सम्भव अभावः प्रतिभा ऐतिह्यम् उपमान चेति षट् प्रमाणानि । तत्रार्थापत्तिर्द्विविधा दृष्टा श्रुता च । तत्र दृष्टा । एकस्मिन् पक्षे आत्मभावो गृहीतश्चेदन्यस्मिन्नप्यात्मभावो गृह्यत एव । श्रुता यथा । दिवा देवदत्तो न भुङ्क्ते अथ च पीनो दृश्यते अतोऽवगम्यते रात्रौ भुङ्क्ते इति ॥ सम्भवो यथा । प्रस्थ इत्युक्ते चत्वार कुडवा. सम्भाव्यन्ते । अभावो नाम प्रागितरेतरात्यन्तसर्वाभावलक्षण. । प्रागभावो यथा

तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनन्तु ॥ ५ ॥
सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात्
तस्मादपिचासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥६॥

---

दृष्टिं साधयति पूर्वदृष्टित्वात्। शेषवद् यथा समुद्रादेक जल पल लवणमासाद्य शेषस्याप्यस्ति लवणभाव इति। सामान्यतो दृष्टम्। देशान्तराद्देशान्तर प्राप्त दृष्टम्। गतिमच्चन्द्रतारक चैत्रवत्। यथा चैत्रनामान देशान्तराद्देशान्तरं प्राप्तमवलोक्य गतिमानयमिति तद्वच्चन्द्रतारकमिति। तथा पुष्पिताम्रदर्शनादन्यत्र पुष्पिताम्रा इति सामान्यतो दृष्टेन साधयति। एतत्सामान्यदृष्टम् ॥ किञ्च तल्लिङ्गलिङ्गिपूर्वकमिति तदनुमान लिङ्गपूर्वकं यत्र लिङ्गेन लिङ्गी अनुमीयते यथा दण्डेन यति। लिङ्गिपूर्वक च यत्र लिङ्गिना लिङ्गमनुमीयते यथा दृष्टा यतिमस्येद त्रिदण्डमिति॥ आप्तश्रुतिराप्तवचन च। आप्ता आचार्य्या ब्रह्मादय। श्रुतिर्वेदः। आप्तश्च श्रुतिश्च आप्तश्रुती तदुक्तमाप्तवचनमिति॥ एव त्रिविध प्रमाणमुक्त तत्र केन प्रमाणेन कि साध्यमुच्यते ॥ ५ ॥

सामान्यतो दृष्टादनुमानादतीन्द्रियाणामिन्द्रियाण्यतीत्य वर्त्तमानाना सिद्धि, प्रधानपुरुषावतीन्द्रियौ सामान्यतो दृष्टेनानुमानेन साध्येते यस्मान्महदादिलिङ्ग त्रिगुणम्। यस्येद त्रिगुण कार्य्य तत् प्रधानमिति। यतश्चाचेतन चेतनमिवाभाति अतोऽन्योऽधिष्ठाता पुरुष इति। व्यक्त प्रत्यक्षसाध्यम्। तस्मादपि चासिद्ध परोक्षमाप्तागमात् सिद्ध यथेन्द्रो देवराज उत्तरा कुरव स्वर्गेऽप्सरस इति परोक्षमाप्तवचनात् सिद्धम्। अत्र कश्चिदाह प्रधानः पुरुषो वा नोपलभ्यते यच्च नोपलभ्यते

अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥७॥
सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्कार्य्यतस्तदुपलब्धिः ।

---

प्राप्ते तथास्ति तस्मात्तावपि न स्तः । यथा द्वितीयं शिरस्तृतीयो बाहुरिति । तदुच्यते । अत्र सतामप्यर्थानामष्टधोपलब्धिर्न भवति । तद् यथा ॥ ६ ॥

इह सतामप्यर्थानामतिदूरादनुपलब्धिर्दृष्टा । यथा देशान्तरस्थानां चैत्रमैत्रविष्णुमित्राणाम् । सामीप्याद् यथा चक्षुषोऽञ्जनानुपलब्धिः । इन्द्रियाभिघाताद् यथा बधिरान्धयोः शब्दरूपानुपलब्धिः । मनोऽनवस्थानाद् यथा व्यग्रचित्तः सम्यक्कथितमपि नावधारयति । सौक्ष्म्याद् यथा धूमोष्मजलनीहारपरमाणवो गगनगता नोपलभ्यन्ते । व्यवधानाद् यथा कुड्येन पिहितं वस्तु नोपलभ्यते । अभिभवाद् यथा सूर्य्यतेजसाभिभूता ग्रहनक्षत्रतारकादयो नोपलभ्यन्ते । समानाभिहाराद् यथा मुद्गराशौ मुद्गः क्षिप्तः कुवलयामलकमध्ये कुवलयामलके क्षिप्ते कपोतमध्ये कपोतो नोपलभ्यते समानद्रव्यमध्याहृतत्वात् । एवमष्टधानुपलब्धिः सतामर्थानामिह दृष्टा । एवं चास्ति किमभ्युपगम्यते प्रधानपुरुषयोरप्येतयोर्नोपलब्धिः केन हेतुना केन चोपलब्धिस्तदुच्यते ॥ ७ ॥

सौक्ष्म्यात्तदनुपलब्धिः प्रधानस्येत्यर्थः । प्रधानं सौक्ष्म्यान्नोपलभ्यते यथाकाशे धूमोष्मजलनीहारपरमाणवः सन्तोऽपि नोपलभ्यन्ते । कथं तर्हि तदुपलब्धिः । कार्य्यतस्तदुपलब्धिः । कार्य्यं दृष्ट्वा कारणमनुमीयते । अस्ति प्रधानं कारणं यस्येदं कार्य्यम् । बुद्धिरहङ्कारपञ्चतन्मात्राणि एकादशेन्द्रियाणि पञ्च-

महदादि तच्च कार्य्यं प्रकृतिविरूपं सरूपं च ॥८॥
असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्य्यम् ॥९॥

---

महाभूतानि एव तत्कार्य्यम्। तच्च कार्य्यं प्रकृतिविरूपम्। प्रकृतिः प्रधानं तस्य विरूपं प्रकृतेरसदृशं सरूपं च समानरूपं च यथा लोकेऽपि पितुस्तुल्य इव पुत्रो भवत्यतुल्यश्च। येन हेतुना तुल्यमतुल्यं तदुपरिष्टाद्वक्ष्यामः। यदिदं महदादिकार्य्यं तत् किं प्रधाने सद्भूताहोस्विदसदाचार्य्यविप्रतिपत्तेरयं संशयः। यतोऽत्र सांख्यदर्शने सत्कार्य्यं बौद्धादीनामसत्कार्य्यम्। यदि सदसन्न भवत्यथासत्सन्न भवतीति विप्रतिषेधस्तत्राह ॥८॥

असदकरणान्न सदसदसतोऽकरणं तस्मात्सत्कार्य्यम् इह लोकेऽसत्करणं नास्ति यथा सिकताभ्यस्तैलोत्पत्तिस्तस्मात्सतः करणादस्ति प्रागुक्तेः। प्रधाने व्यक्तमतः सत्कार्य्यम्। किं चान्यदुपादानग्रहणादुपादानं कारणं तस्य ग्रहणादिह लोके यो येनार्थी स तदुपादानग्रहणं करोति दध्यर्थी क्षीरस्य न तु जलस्य तस्मात् सत्कार्य्यम्। इतश्च सर्वसम्भवाभावात् सर्वस्य सर्वत्र सम्भवो नास्ति यथा सुवर्णस्य रजतादौ तृणपांशुसिकतासु तस्मात् सर्वसम्भवाभावात् सत्कार्य्यम्। इतश्च शक्तस्य शक्यकरणात्। इह कुलालः शक्तो मृद्दण्डचक्रचीवररज्जुनीरादिकरणोपकरणं वा शक्यमेव घटं मृत्पिण्डादुत्पादयति तस्मात् सत्कार्य्यम्। इतश्च कारणभावाच्च सत्कार्य्यम्। कारणं यल्लक्षणं तल्लक्षणमेव कार्य्यमेव यथा यवेभ्योऽपि यवा व्रीहिभ्यो व्रीहयः यदाऽसत्कार्य्यं स्यात्ततः कोद्रवेभ्यः शालयः स्युर्न च सन्तीति तस्मात् सत्कार्य्यम्। एवं पञ्चभिर्हेतुभि

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥१०॥

प्रधाने महदादिलिङ्गमस्ति तस्मात् सत् तदुपलभ्यते इति। प्रकृतिविरूपं सरूपं च यदुक्तं तत् कथमित्युच्यते ॥ ९ ॥

व्यक्तं महदादिकार्यं हेतुमदिति हेतुरस्यास्ति हेतुमत्। उपादानं हेतुः कारणं निमित्तमिति पर्यायाः। व्यक्तस्य प्रधानं हेतुरस्ति अतो हेतुमद् व्यक्तं भूतपर्यन्तं हेतुमद् बुद्धितत्त्वं प्रधानेन हेतुमानहङ्कारो बुद्ध्या। पञ्चतन्मात्राणि एकादशेन्द्रियाणि हेतुमन्त्यहङ्कारेण। आकाशं शब्दतन्मात्रेण हेतुमत्। वायुः स्पर्शतन्मात्रेण हेतुमान्। तेजो रूपतन्मात्रेण हेतुमत्। आपो रसतन्मात्रेण हेतुमत्यः। पृथिवी गन्धतन्मात्रेण हेतुमती। एवं भूतपर्यन्तं व्यक्तं हेतुमत्। किं चान्यदनित्यं यस्मादन्यस्मादुत्पद्यते यथा मृत्पिण्डादुत्पद्यते घटः स चानित्यः। किं चान्यद् अव्यापि असर्वगमित्यर्थः यथा प्रधानपुरुषौ सर्वगतौ नैवं व्यक्तम्। किं चान्यत् सक्रियं संसारकाले संसरति त्रयोदशविधेन करणेन संयुक्तं सूक्ष्मं शरीरमाश्रित्य संसरति तस्मात् सक्रियम्। किं चान्यदनेकं बुद्धिरहङ्कारः पञ्चतन्मात्राण्येकादशेन्द्रियाणि च पञ्चमहाभूतानि तन्मात्राश्रितानि। किञ्च लिङ्गं लययुक्तं लयकाले पञ्चमहाभूतानि तन्मात्रेषु लीयन्ते तान्येकादशेन्द्रियैः सहाहङ्कारे स च बुद्धौ सा च प्रधाने लयं यातीति। तथा सावयवम् अवयवाः शब्दस्पर्शरसरूपगन्धाः तैः सह। किञ्च परतन्त्रं नात्मनः प्रभवति यथा प्रधानतन्त्रा बुद्धिः बुद्धितन्त्रोऽहङ्कारः अहङ्कारतन्त्राणि तन्मात्राणीन्द्रियाणि च तन्मात्रतन्त्राणि पञ्चमहाभूतानि च। एवं परतन्त्रं पराधीनं व्याख्यातं व्यक्तम्।

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि

अथोऽव्यक्तं व्याख्यामः। विपरीतमव्यक्तम्। एतैरेव गुणैर्व्यक्तो-क्तैर्विपरीतमव्यक्तं हेतुमद् व्यक्तमुक्तम्। नहि प्रधानात् परं किञ्चिदस्ति यतः प्रधानस्यानुत्पत्तिः तस्मादहेतुमदव्यक्तम्। तथानित्यं च व्यक्तं नित्यमव्यक्तमनुत्पाद्यत्वात् नहि भूतानि कुतश्चिदुत्पद्यन्ते इति प्रधानम्॥ किं चाव्यापि व्यक्तं व्यापि प्रधानं सर्वगतत्वात्॥ सक्रियं व्यक्तमक्रियमव्यक्तं सर्वगतत्वादेव॥ तथाऽनेकं व्यक्तमेकं प्रधानं कारणत्वात् त्रयाणां लोकानां प्रधानमेकं कारणं तस्मादेकं प्रधानम्॥ तथाश्रितं व्यक्तमनाश्रितमव्यक्तमकार्य्यत्वान्नहि प्रधानात् किञ्चिदस्ति परं यस्य प्रधानं कार्य्यं स्यात्॥ तथा व्यक्तं लिङ्गमलिङ्गमव्यक्तं नित्यत्वान्महदादि लिङ्गं प्रलयकाले परस्परं प्रलीयते नैवं प्रधानं तस्मादलिङ्गं प्रधानम्॥ तथा सावयवं व्यक्तं निरवयवमव्यक्तं नहि शब्दस्पर्शरसरूपगन्धाः प्रधाने सन्ति॥ तथा परतन्त्रं व्यक्तं स्वतन्त्रमव्यक्तं प्रभवत्यात्मनः॥ एवं व्यक्ताव्यक्त-योर्वैधर्म्यमुक्तं साधर्म्यमुच्यते यदुक्तं सरूपं च॥ १०॥

त्रिगुणं व्यक्तं सत्त्वरजस्तमांसि त्रयो गुणा यस्येति। अवि-वेकि व्यक्तं न विवेकोऽस्यास्तीति। इदं व्यक्तमिमे गुणा इति न विवेककर्त्तुं याति अयं गौरयमश्व इति यथा ये गुणास्तद्-व्यक्तं यद्व्यक्तं ते च गुणा इति। तथा विषयो व्यक्तं भोज्य-मित्यर्थः सर्वपुरुषाणां विषयभूतत्वात्। तथा सामान्यं व्यक्तं मूल्यदासीवत् सर्वसाधारणत्वात्॥ अचेतनं व्यक्तं सुखदुःखमोहान्न चेतयतीत्यर्थः। तथा प्रसवधर्मि व्यक्तं तद् यथा बुद्धेरहङ्कारः प्रसूयते तस्मात् पञ्चतन्मात्राणि एकादशेन्द्रियाणि च प्रसूयन्ते तन्मात्रेभ्यः पञ्चमहाभूतानि॥ एवमेते व्यक्तधर्माः

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।

---

व्यक्तमेकमव्यक्तं तथा पुमानप्येकः। आश्रितं व्यक्तमनाश्रितमव्यक्तं तथा च पुमाननाश्रितः। लिङ्गं व्यक्तमलिङ्गं प्रधानं तथा च पुमानप्यलिङ्गः। न क्वचिल्लीयत इति। सावयवं व्यक्तं निरवयवमव्यक्तं तथा च पुमान् निरवयवः। नहि पुरुषे शब्दादयोऽवयवाः सन्ति। किञ्च परतन्त्रं व्यक्तं स्वतन्त्रमव्यक्तं तथा च पुमानपि स्वतन्त्रः। आत्मनः प्रभवतीत्यर्थः। एवमेतदव्यक्तपुरुषयोः साधर्म्यं व्याख्यातं पूर्वस्यामार्य्यायाम्। व्यक्तप्रधानयोः साधर्म्यं पुरुषस्य वैधर्म्यं च त्रिगुणमविवेकीत्यादि प्रकृतार्य्याया व्याख्यातम्। तत्र यदुक्तं त्रिगुणमिति व्यक्तमव्यक्तं च तत् के ते गुणा इति तत्स्वरूपप्रतिपादनायेदमाह ॥ ११ ॥

प्रीत्यात्मका अप्रीत्यात्मका विषादात्मकाश्च गुणाः सत्वरजस्तमांसीत्यर्थः। तत्र प्रीत्यात्मकं सत्वं प्रीतिः सुखं तदात्मकमिति। अप्रीत्यात्मकं रजः। विषादात्मकं तमः। विषादो मोहः। तथा प्रकाशप्रवृत्तिनियमार्थाः। अर्थशब्दः सामर्थ्यवाची प्रकाशार्थं सत्वं प्रकाशसमर्थमित्यर्थः। प्रवृत्त्यर्थं रजो। नियमार्थं तमः स्थितौ समर्थमित्यर्थः प्रकाशक्रियास्थितिशीला गुणा इति। तथाऽन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च। अन्योऽन्याभिभवाः अन्योऽन्याश्रया अन्योऽन्यजनना अन्योऽन्यमिथुनाः अन्योऽन्यवृत्तयश्च ते तथोक्ताः। अन्योऽन्याभिभवा इति अन्योऽन्यं परस्परमभिभवन्तीति प्रीत्यप्रीत्यादिभिर्धर्मैराविर्भवन्ति यथा यदा सत्वमुत्कटं भवति तदा रजस्तमसी अभिभूय स्वगुणैः प्रीतिप्रकाशात्मकेनावतिष्ठते यदा रजस्तदा सत्वतमसी अप्रीतिप्रवृत्तिधर्मेण

अविवेक्यादिः सिद्धस्त्रैगुण्यात्तद्विपर्य्ययाभावात्।
कारणगुणात्मकत्वात् कार्य्यस्याव्यक्तमपि सिद्धम् १४

दर्शने उत्कटमुपष्टम्भं करोति एवं रजोवृत्तिः। तथा रजश्च चलं दृष्टं रजोवृत्तिश्चलचित्तो भवति। गुरुवरणकमेव तमः यदा तम उत्कटं भवति तदा गुरूण्यङ्गान्यावृतानीन्द्रियाणि भवन्ति स्वार्थासमर्थानि। अत्राह यदि गुणाः परस्परं विरुद्धाः स्वमतेनैव कमर्थं निष्पादयन्ति तर्हि कथं प्रदीपवच्चार्थतो वृत्तिः प्रदीपेन तुल्यं प्रदीपवदर्थतः साधना वृत्तिरिष्टा यथा प्रदीपः परस्परविरुद्धतैलाग्निवर्त्तिसंयोगादर्थप्रकाशता जनयति एवं सत्वरजस्तमांसि परस्परं विरुद्धान्यर्थं निष्पादयन्ति। अन्तरप्रश्नो भवति त्रिगुणमविवेकिविषय इत्यादि प्रधानं व्यक्तं च व्याख्यातं तत्र प्रधानमुपलभ्यमानं महदादि च त्रिगुणमविवेक्यादीति च कथमवगम्यते तत्राह ॥ १३ ॥

योऽयमविवेक्यादिर्गुणः स त्रैगुण्यान्महदादौऽव्यक्तेनायं सिध्यति। अत्रोच्यते तद्विपर्य्ययाभावात्तस्य विपर्य्ययस्तद्विपर्य्ययस्तस्याभावस्तद्विपर्य्ययाभावस्तस्मात् सिद्धमव्यक्तम्। यथा यत्रैव तन्तवस्तत्रैव पटः अन्ये तन्तवोऽन्यः पटो न कुतस्तद्विपर्य्ययाभावात्। एवं व्यक्ताव्यक्तसम्पन्नो भवति दूरं प्रधानमासन्नं व्यक्तं यो व्यक्तं पश्यति स प्रधानमपि पश्यति तद्विपर्य्ययाभावात्। इतश्चाव्यक्तं सिद्धं कारणगुणात्मकत्वात् कार्य्यस्य। लोके यदात्मकं कारणं तदात्मकं कार्य्यमपि तथा कृष्णेभ्यस्तन्तुभ्यः कृष्ण एव पटो भवति। एवं महदादिलिङ्गमविवेकिविषयं सामान्यमचेतनं प्रसवधर्मि यदात्मकं लिङ्गं तदात्मकमव्यक्तमपि सिद्धम्। त्रैगुण्यादविवेक्यादिर्व्यक्ते सिद्धस्तद्विपर्य्ययाभावात् एवं कारणगुणात्मकत्वात् कार्य्यस्याव्यक्तमपि सिद्धमि-

अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥१२॥

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥१३॥

---

यदा तमस्तदा सत्त्वरजसी विषादवत्त्वेन इति। तथा अन्योऽन्याश्रयाश्च द्व्यणुकवत् गुणाः। अन्योऽन्यजननाः यथा मृत्पिण्डो घटं जनयति। तथाऽन्योऽन्यमिथुनाश्च यथा स्त्रीपुंसौ अन्योऽन्यमिथुनौ तथा गुणाः। उक्तं च

अन्योऽन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते।
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते॥

परस्परसहाया इत्यर्थः। अन्योऽन्यवृत्तयश्च परस्परं वर्तन्ते गुणाः गुणेषु वर्तन्त इति वचनात्। यथा सुरूपा सुशीला स्त्री सर्वसुखहेतुः सपत्नीनां सैव दुःखहेतुः सैव रागिणां मोहं जनयति एवं सत्त्वं रजस्तमसोर्वृत्तिहेतुः यथा राजा सदोद्युक्तः प्रजापालने दुष्टनिग्रहे शिष्टानां सुखमुत्पादयति दुष्टानां दुःखं मोहं च एवं रजः सत्त्वतमसोर्वृत्तिं जनयति। तथा तमः स्वरूपेणावरणात्मकेन सत्त्वरजसोर्वृत्तिं जनयति यथा मेघाः खमावृत्य जगतः सुखमुत्पादयन्ति ते वृष्ट्या कर्षुकाणां कर्षणोद्योगं जनयन्ति विरहिणां मोहमेवमन्योऽन्यवृत्तयो गुणाः। किञ्चान्यत् ॥ १२ ॥

सत्त्वं लघु प्रकाशकं च यदा सत्त्वमुत्कटं भवति तदा लघून्यङ्गानि बुद्धिप्रकाशश्च प्रसन्नतेन्द्रियाणां भवति। उपष्टम्भकं चलं च रजः उपष्टभ्नातीत्युपष्टम्भकमुद्योतकं यथा वृषो वृष

**कारणमस्त्यव्यक्तं प्रवर्त्तते त्रिगुणतः समुदयाच्च।**
**परिणामतः सलिलवत्प्रतिप्रतिगुणाश्रयविशेषात्॥१६॥**

व्यक्तिः। विश्वरूपस्य भावो वैश्वरूप तस्याविभागादस्ति प्रधानं यस्मात् त्रैलोक्यस्य पञ्चाना पृथिव्यादीना महाभूताना परस्पर विभागो नास्ति महाभूतेष्वन्तर्भूतास्त्रयो लोका इति पृथिव्यापस्तेजो वायुराकाशमिति एतानि पञ्च महाभूतानि प्रलयकाले सृष्टिक्रमेणैवाविभागं यान्ति तन्मात्रेषु परिणामिषु तन्मात्राण्येकादशेन्द्रियाणि चाहङ्कारे अहङ्कारो बुद्धौ बुद्धि प्रधाने एव त्रयो लोका. प्रलयकाले प्रकृतावविभाग गच्छन्ति तस्मादविभागात् चीरदधिवद् व्यक्ताव्यक्तयोरस्त्यव्यक्तं कारणम्। अतश्च॥ १५॥

अव्यक्त प्रख्यात कारणमस्ति यस्मान्महदादिलिङ्ग प्रवर्त्तते। त्रिगुणत' त्रिगुणात् सत्वरजस्तमोगुणा यस्मिन् तत् त्रिगुण तत् किमुक्त भवति सत्वरजस्तमसा साम्यावस्था प्रधानम्। तथा समुदयात् यथा गङ्गास्रोतासि त्रीणि रुद्रमूर्द्धनि पतितानि एक श्रोतो जनयन्ति एव त्रिगुणमव्यक्तमेकं व्यक्तं जनयति तथा वा तन्तव समुदिताः पट जनयन्ति एवमव्यक्तं गुणसमुदयान्महदादि जनयतीति त्रिगुणत समुदयाच्च व्यक्त जगत् प्रवर्त्तते। यस्मादेकस्मात् प्रधानाद् व्यक्त तस्मादेकरूपेण भवितव्यम्। नैष दोष. परिणामत सलिलवत् प्रतिप्रतिगुणाश्रयविशेषादेकस्मात् प्रधानात् त्रयो लोका. समुत्पन्नास्तुल्यभावा न भवन्ति देवा सुखेन युक्ता मनुष्या दुःखेन तिर्य्यञ्चो मोहेन एकस्मात् प्रधानात् प्रवृत्तं व्यक्त प्रतिप्रतिगुणाश्रयविशेषात् परिणामत सलिलवद्भवति। प्रतिप्रतीति वीप्सा। गुणानामाश्रयो गुणाश्रयस्तद्विशेषस्तं गुणा-

भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥१५॥

---

स्येतन्मिथ्या लोके यन्नोपलभ्यते तन्नास्ति एवं प्रधानमप्यस्ति किन्तु नोपलभ्यते ॥ १४ ॥

कारणमस्त्यव्यक्तमिति क्रियाकारकसम्बन्धः । भेदानां परिमाणात् लोके यत्र कर्तास्ति तस्य परिमाणं दृष्टं यथा कुलालः परिमितैर्मृत्पिण्डैः परिमितानेव घटान् करोति एवं महदपि महदादिलिङ्गं परिमितं भेदतः प्रधानकार्यम् एका बुद्धिरेको ऽहङ्कारः पञ्चतन्मात्राणि एकादशेन्द्रियाणि पञ्चमहाभूतानीत्येवं भेदानां परिमाणादस्ति प्रधानं कारणं यद्व्यक्तं परिमितमुत्पादयति । यदि प्रधानं न स्यात्तदा निष्परिमाणमिदं व्यक्तमपि न स्यात् परिमाणाच्च भेदानामस्ति प्रधानं यस्माद् व्यक्तमुत्पन्नम् । तथा समन्वयादिह लोके प्रसिद्धिरस्ति यथा व्रतधारिणं बटुं दृष्ट्वा समन्वयति नूनमस्य पितरौ ब्राह्मणाविति एवमिदं त्रिगुणं महदादिलिङ्गं दृष्ट्वा साधयामोऽस्य यत् कारणं भविष्यतीति अतः समन्वयादस्ति प्रधानम् । तथा शक्तितः प्रवृत्तेश्च इह यो यस्मिन् शक्तः स तस्मिन्नेवार्थे प्रवर्तते यथा कुलालो घटस्य करणे समर्थो घटमेव करोति न पटं रथं वा । तथास्ति प्रधानं कारणं कुतः कारणकार्य विभागात् । करोतीति कारणम् । क्रियत इति कार्यम् । कारणस्य कार्यस्य च विभागो यथा घटो दधिमधूदकपयसां धारणे समर्थो न तथा तत्कारणं मृत्पिण्डः । मृत्पिण्डो वा घटं निष्पादयति न चैव घटो मृत्पिण्डम् । एवं महदादिलिङ्गं दृष्ट्वानुमीयते । अस्ति विभागः तत्कारणं यस्य विभाग इदं व्यक्तमिति । इतश्च अविभागाद्वैश्वरूप्यस्य विश्वं जगत् तस्य रूपं

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैव ॥ १८ ॥

---

स्तथा पुमान्। अधिष्ठानाद् यथेह लङ्घनप्लवनधावनसमर्थैरश्वै-र्युक्तो रथ सारथिनाऽधिष्ठित' प्रवर्त्तते तथात्माऽधिष्ठानाच्छ-रीरमिति। तथाचोक्त षष्टीतन्त्रे पुरुषाधिष्ठित प्रधान प्रव-र्त्तते। अतोऽस्यात्माभोक्तृत्वात्। यथा मधुराम्ललवणकटु-तिक्तकषायषड्रसोपबृंहितस्य सयुक्तस्यान्नस्य साध्यते एवं महदादिलिङ्गस्य भोक्तृत्वाभावादस्ति स आत्मा यस्येद भोग्य शरीरमिति। इतश्च कैवल्यार्थं प्रवृत्ते श्च केवलस्य भाव' कैवल्य तन्निमित्त या च प्रवृत्तिस्तस्या' स्तकैवल्यार्थं प्रवृत्ते' सकाशा-दनुमीयते अस्त्यात्मेति यतो सर्वो विद्वानविद्वाश्च ससारसन्ता-नचयमिच्छति। एवमेभिर्हेतुभिरस्त्यात्मा शरीराद् व्यति-रिक्तः। अथ स' किमेक' सर्वशरीरेऽधिष्ठाता मणिरसनात्म-कसूत्रवत् आहोस्विद् बहव आत्मनः प्रतिशरीरमधिष्ठातार इत्यत्रोच्यते ॥ १७ ॥

जन्म च मरणञ्च करणानि च जन्ममरणकरणानि तेषा प्रति-नियमात् प्रत्येकनियमादित्यर्थः। यद्येक एव आत्मा स्यात्तत एकस्य जन्मनि सर्व एव जायेरन् एकस्य मरणे सर्वेऽपि म्रिये-रन् एकस्य करणवैकल्ये बाधिर्य्यान्धत्वमूकत्वकुणित्वखञ्जत्व-लक्षणे सर्वेऽपि बधिरान्धकुणिखञ्जा' स्युर्न चैव भवति तस्मा-ज्जन्ममरणकरणाना प्रतिनियमात् पुरुषबहुत्व सिद्धम्। इत-श्चायुगपत् प्रवृत्तेश्च युगपदेककाल न युगपदयुगपत् प्रवर्त्तनं यस्मादयुगपद्धर्मादिषु प्रवृत्तिर्दृश्यते एके धर्मे प्रवृत्ता अन्येऽधर्मे वैराग्येऽन्ये ज्ञानेऽन्ये प्रवृत्ताः तस्मादयुगपत् प्रवृत्तेश्च बहव

सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥१७॥

---

श्रयविशेषं प्रतिनिधाय प्रतिप्रतिगुणाश्रयविशेषं परिणामात् प्रवर्तते व्यक्तं यथा आकाशादेकरसं सलिलं पतितं नानारूपात् संश्लेषाद्भिद्यते तद्रसान्तरैरेवमेकस्वभावात् प्रधानात् प्रवृत्तास्त्रयो लोका नैकस्वभावा भवन्ति देवेषु सत्त्वमुत्कटं रजस्तमसी उदासीने तेन तेऽत्यन्तसुखिनो मनुष्येषु रज उत्कटं भवति सत्त्वतमसी उदासीने तेन तेऽत्यन्तदुःखिनस्तिर्यक्षु तम उत्कटं भवति सत्त्वरजसी उदासीने तेन तेऽत्यन्तमूढाः ॥ एवमार्याद्वयेन प्रधानस्यास्तित्वमभ्युपगम्यते इतश्चोत्तरं पुरुषास्तित्वप्रतिपादनार्थमाह ॥ १६ ॥

यदुक्तं व्यक्ताव्यक्तविज्ञानान्मोक्षः प्राप्यत इति तत्र व्यक्तादनन्तरमव्यक्तं पञ्चभिः कारणैरधिगतमव्यक्तवत् पुरुषोऽपि सूक्ष्मस्तस्यानुमानेनास्तित्वं प्रतिपद्यते। अस्ति पुरुषः कस्मात् सङ्घातपरार्थत्वात्। योऽयं महदादिसंघातः स पुरुषार्थ इत्यनुमीयते अचेतनत्वात् पर्यङ्कवत्। यथा पर्यङ्कः प्रत्येकं गात्रोत्पलपादकतूलीप्रच्छादनपटोपधानसंघातः परार्थो नहि स्वार्थः पर्यङ्कस्य नहि किञ्चिदपि गात्रोत्पलाद्यवयवानां परस्परं कृत्यमस्ति। अतोऽवगम्यतेऽस्ति पुरुषो यः पर्यङ्के शेते यस्यार्थे पर्यङ्कः तस्मात् परार्थमिदं शरीरं पञ्चानां महाभूतानां संघातो वर्ततेऽस्ति पुरुषो यस्येदं भोग्यशरीरं भोग्यं महदादिसंघातरूपं समुत्पन्नमिति। इतश्चात्माऽस्ति त्रिगुणादिविपर्ययात्। यदुक्तं पूर्वस्यामार्यायां त्रिगुणमविवेकि विषय इत्यादि। तस्माद्विपर्ययाद्येनोक्तं तद्विपरीत

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्त्तेव भवतीत्युदासीनः ॥२०॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥२१॥

---

इह पुरुषश्चेतनावत् तेन चेतनावभास युक्तं महदादि-लिङ्ग चेतनावदिव भवति यथा लोके घटः शीतसंयुक्तं शीतः उष्णसयुक्त उष्ण एव महदादिलिङ्गं तस्य सयोगात् पुरुष-सयोगाच्चेतनावदिव भवति तस्माद् गुणा अध्यवसाय कुर्वन्ति न पुरुषं । यद्यपि लोके पुरुषः कर्त्ता गन्तेत्यादि प्रयुज्यते तथाप्यकर्त्ता पुरुष कथ गुणकर्तृत्वे च तथा कर्त्तेव भवत्यु दासीनः गुणाना कर्त्तृत्वे सति उदासीनोऽपि पुरुष कर्त्तेव भवति न कर्त्ता। अत्र दृष्टान्तो भवति यथाऽचौरश्चौरैः सह गृहीतश्चौर इत्यवगम्यते एव त्रयो गुणा कर्त्तारस्तैः सयुक्त पुरुषोऽकर्त्तापि कर्त्ता भवति कर्तृसयोगात्। एवं व्यक्ताव्य-क्तज्ञाना विभागो विख्यातो यद्विभागान्मोक्षप्राप्तिरिति। अथै-तयो प्रधानपुरुषयोः किंहेतु सङ्घात उच्यते ॥ २० ॥

पुरुषस्य प्रधानेन सह संयोगो दर्शनार्थं प्रकृति महदादि कार्य्यभूतपर्य्यन्त पुरुष पश्यति एतदर्थं प्रधानस्यापि पुरु-षेण सयोग । कैवल्यार्थं स च सयोग, पङ्ग्वन्धवदुभयोरपि द्रष्टव्य यथा एक पङ्गुरेकश्चान्ध एतौ द्वावपि गच्छन्तौ महता सामर्थ्येनाटव्या सार्थस्य स्तेनकृताटुपप्लवात् स्वबन्धुपरित्यक्तौ दैवादितश्चेतश्च स्लगत्या च तौ सयोगमुपयातौ पुनस्तयोः स्वव-चसोर्विश्वस्तत्वेन सयोगो गमनार्थं दर्शनार्थं च भवत्यन्धेन पङ्गुः स्कन्धमारोपित एव शरीरारूढपङ्गुदर्शितेन मार्गेणान्धो

तस्माच्च विपर्य्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥

---

इति सिद्धम्। किञ्चान्यत् त्रैगुण्यविपर्ययाच्चैव त्रिगुणभाव विपर्ययाच्च पुरुषबहुत्वं सिद्धम्। यथा सामान्ये जन्मनि एकः सात्त्विकः सुखी। अन्यो राजसो दुःखी। अन्यस्ता-मसो मोहवान्। एवं त्रैगुण्यविपर्ययाद्बहुत्वं सिद्धमिति। अकर्ता पुरुष इत्येतदुच्यते। १८।

तस्माच्च विपर्य्यासात्तस्माच्च यथोक्तत्रैगुण्यविपर्य्यासादि म साक्षिमुँच पुरुषो विवेकी भोक्तेत्यादिगुणानां पुरुषस्य यो विपर्यासस्तस्मात् सत्त्वरजस्तमःसु कर्तृभूतेषु साक्षित्वं सिद्धं पुरुषस्येति योऽयमधिकृतो बहुत्वं प्रति। गुणा एव कर्तारः प्रवर्तन्ते साक्षी न प्रवर्तते नापि निवर्तत एव। किञ्चान्यत् कैवल्यं केवलभावः कैवल्यमन्यत्वमित्यर्थः। त्रिगु-णेभ्यः केवलः। माध्यस्थ्यं मध्यस्थभावः परिव्राजकवत् मध्यस्थः पुरुषः। यथा कश्चित् परिव्राजको ग्रामीणेषु कर्ष-णार्थेषु प्रवृत्तेषु केवलो मध्यस्थः पुरुषोऽप्येवं गुणेषु वर्तमानेषु न प्रवर्तते। तस्माद्द्रष्टृत्वमकर्तृभावश्च यस्मान्मध्यस्थस्तस्मा-द्द्रष्टा तस्मादकर्ता पुरुषस्तेषां कर्मणामिति सत्त्वरजस्तमांसि त्रयो गुणाः कर्मकर्तृभावेन प्रवर्तन्ते न पुरुषः एवं पुरुषस्य साक्षित्वं च सिद्धम्। यस्मादकर्ता पुरुषस्तत् कथमध्य-वसायं करोति धर्मं करिष्याम्यधर्मं न करिष्यामीत्यतः कर्ता भवति न च कर्ता पुरुषः उभयथापि दोषः स्यादिति। अत उच्यते ॥ १९ ॥

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्य्यम्।

---

द्वायु रूपतन्मात्रात्तेजः रसतन्मात्रादापः गन्धतन्मात्रात् पृथिवी एव पञ्चभ्यः परमाणुभ्यः पञ्चमहाभूतान्युत्पद्यन्ते। यदुक्तं व्यक्ताव्यक्तज्ञविज्ञानान्मोक्ष इति तत्र महदादि भूतान्तं त्रयोविंशतिभेदं व्याख्यातमव्यक्तमपि भेदानां परिमाणादित्यादिना व्याख्यातं पुरुषोऽपि सङ्घातपरार्थत्वादित्यादिभिर्हेतुभिर्व्याख्यातं। एवमेतानि पञ्चविंशतितत्त्वानि यस्त्रैलोक्यं व्याप्तं जानाति तस्य भावोऽखिलत्वं तत्त्वं यथोक्तम्। पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः। जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥ तानि यथा प्रकृतिः पुरुषो बुद्धिरहङ्कारः पञ्चतन्मात्रा एकादशेन्द्रियाणि पञ्चमहाभूतानि इत्येतानि पञ्चविंशति तत्त्वानि। तत्रोक्तं प्रकृतेर्महानुत्पद्यते तस्य महतः किं लक्षणमित्येतदाह॥ २२॥

अध्यवसायो बुद्धिलक्षणम्। अध्यवसनमध्यवसायः यथा बीजे भविष्यद्वृत्तिकोऽङ्कुरस्तद्वदध्यवसायोऽयं घटोऽयं पट इत्येवम् अध्यवस्यति या सा बुद्धिरिति लक्ष्यते सा च बुद्धिरष्टाङ्गिका सात्त्विकतामसरूपभेदात् तत्र बुद्धेः सात्त्विकं रूपं चतुर्विधं भवति धर्मो ज्ञानं वैराग्यमैश्वर्य्यं चेति। तत्र धर्मो नाम दयादानयमनियमलक्षणस्तत्र यमा नियमाश्च पातञ्जलेऽभिहिता अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधाना नियमाः। ज्ञानं प्रकाशोऽवगमो भानमिति पर्य्यायास्तच्च द्विविधं बाह्यमाभ्यन्तरं चेति। तत्र बाह्यं नाम वेदाः शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषाख्यषडङ्गसहिताः पुराणानि न्यायमीमांसाधर्म-

**प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः।**
**तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि ॥ २२ ॥**

---

याति पङ्ग्वन्धसम्बन्धवत्। एवं पुरुषे दर्शनशक्तिरस्ति पङ्गुवत् क्रियाप्रधाने क्रियाशक्तिरन्धवत् दर्शनशक्तिः। यथा वानयोः पङ्ग्वन्धयोः कृतार्थयोर्विभागो भविष्यतीप्सितस्थान प्राप्तयोरेवं प्रधानमपि पुरुषस्य मोक्षं कृत्वा निवर्तते पुरुषोऽपि प्रधानं दृष्ट्वा कैवल्यं गच्छति तयोः कृतार्थयोर्विभागो भविष्यति। किञ्चान्यत् तत्कृत सर्गस्तेन संयोगेन कृतस्तत् कृतः सर्गः सृष्टिः। यथा स्त्रीपुरुषसंयोगात् सुतोत्पत्तिस्तथा प्रधानपुरुषसंयोगात् सर्गस्योत्पत्तिः। इदानीं सर्गविभाग दर्शनायाह ॥ २१ ॥

प्रकृतिः प्रधानं ब्रह्म अव्यक्तं बहुधानकं मायेति पर्यायाः। अलिङ्गस्य प्रकृतेः सकाशान्महानुत्पद्यते महान् बुद्धिरासुरी मतिः ख्यातिर्ज्ञानं प्रज्ञापर्यायैरुत्पद्यते तस्माच्च महतोऽहङ्कार उत्पद्यतेऽहङ्कारो भूतादिर्वैकृतस्तैजसोऽभिमान इति पर्यायाः तस्माच्च षोडशकः तस्मादहङ्कारात्षोडशकः षोडशकरूपेण गण उत्पद्यते। स यथा। पञ्च तन्मात्राणि शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तन्मात्रसूक्ष्मपर्यायवाच्यानि। तत एकादशेन्द्रियाणि श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमिति पञ्च बुद्धीन्द्रियाणि। वाक्पाणिपादपायूपस्थाः पञ्चकर्मेन्द्रियाण्युभयात्मकमेकादशं मन एवं षोडशको गणोऽहङ्कारादुत्पद्यते। किञ्च पञ्चभ्यः पञ्चभूतानि तथा षोडशगणात् पञ्चभ्यस्तन्मात्रेभ्यः सकाशात् पञ्च वै महाभूतान्युत्पद्यन्ते। यदुक्तं शब्दतन्मात्रादाकाशं स्पर्शतन्मात्रा

अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्त्तते सर्गः।
एकादशकश्च गणस्तन्मात्रः पञ्चकश्चैव ॥ २४ ॥
सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥

---

एकादशकश्च गण एकादशेन्द्रियाणि तथा तन्मात्रो गण. पञ्चक पञ्चलक्षणोपेत' शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्र-रसतन्मात्रगन्धतन्मात्रलक्षणोपेत' किंलक्षणात् सर्ग इत्येत-दाह ॥ २४ ॥

सत्त्वेनाभिभूते यदा रजस्तमसी अहङ्कारे भवतस्तदा सोऽहङ्कारः सात्त्विकस्तस्य च पूर्वाचार्य्यै. सञ्ज्ञा कृता वैकृत इति। तस्माद्विकृतादहङ्कारादेकादशक इन्द्रियगण उत्प-द्यते। तस्मात् सात्त्विकानि विशुद्धानीन्द्रियाणि स्वविषय-समर्थानि तस्मादुच्यते सात्त्विक एकादशक इति। किञ्चान्यद् भूतादेस्तन्मात्र' स तामसः तमसाभिभूते सत्त्वरजसी अहङ्कारे यदा भवत सोऽहङ्कारस्तामस उच्यते तस्य पूर्वाचार्य्य-कृता संज्ञा भूतादिस्तस्माद् भूतादेरहङ्कारात्तन्मात्र पञ्चको गण उत्पद्यते भूतानामादिभूतस्तमोबहुलस्तेनोक्त स तामस इति। तस्माद् भूतादे पञ्चतन्मात्रको गण' किञ्च तैजसादु-भय यदा रजसाभिभूते सत्त्वतमसी भवतस्तदा तस्मात् सोऽह-ङ्कारस्तैजस इति सञ्ज्ञा लभते तस्मात्तैजसादुभयमुत्पद्यते। उभयमिति एकादशो गणस्तन्मात्र' पञ्चक'। सोऽयं सात्त्विको ऽहङ्कारो वैकृतिको विकृतो भूत्वा एकादशेन्द्रियाण्युत्पादयति स तैजसमहङ्कारं सहाय गृह्णाति सात्त्विको निष्क्रिय स तैज-सयुक्त इन्द्रियोत्पत्तौ असमर्थ तथा तामसोऽहङ्कारो भूतादि.

सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥

---

शास्त्राणि चेति। आभ्यन्तरं प्रकृतिपुरुषज्ञानमियं 'प्रकृतिः सत्त्वरजस्तमसां साम्यावस्थाऽयं पुरुषः सिद्धो निर्गुणो व्यापी चेतन इति। तत्र बाह्यज्ञानेन लोकपङ्क्तिर्लोकानुराग इत्यर्थः। आभ्यन्तरेण ज्ञानेन मोक्ष इत्यर्थः। वैराग्यमपि द्विविधं बाह्यमाभ्यन्तरं च बाह्यं दृष्टविषयवैतृष्ण्यमर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनात् विरक्तस्याभ्यन्तरं प्रधानमप्यत्र स्वप्नेन्द्रजालसदृशमिति विरक्तस्य मोक्षेप्सोर्यदुत्पद्यते तदाभ्यन्तरं वैराग्यम्। ऐश्वर्यमीश्वरभावस्तच्चाष्टगुणमणिमा महिमा गरिमा लघिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्र कामावसायित्वं चेति। अणोर्भावोऽणिमा सूक्ष्मो भूत्वा जगति विचरतीति। महिमा महान् भूत्वा विचरतीति। लघिमा मृणालतूलावयवादपि लघुतया पुष्पकेसराग्रेष्वपि तिष्ठति। प्राप्तिरभिमतं वस्तु यत्र तत्रावस्थितं प्राप्नोति। प्राकाम्यं प्रकामतो यदेवेच्छति तदेव विदधाति। ईशित्वं प्रभुतया त्रैलोक्यमपीष्टे। वशित्वं सर्वं वशीभवति। यत्र कामावसायित्वं ब्रह्मादिस्तम्बपर्यन्तं यत्र कामस्तत्रैवास्य स्वेच्छया स्थानासनविहारानाचरतीति। चत्वार एतानि बुद्धेः सात्त्विकानि रूपाणि यदा सत्त्वेन रजस्तमसी अभिभूते तदा पुमान् बुद्धिगुणान् धर्मादीनाप्नोति। किञ्चान्यत् तामसमस्माद्विपर्यस्तमस्माद्धर्मादेर्विपरीतं तामसं बुद्धिरूपं तत्र धर्मादिविपरीतोऽधर्म एवमज्ञानमवैराग्यमनैश्वर्यमिति। एवं सात्त्विकैस्तामसैरष्टरूपैरुपेता बुद्धिस्त्रिगुणादव्यक्तादुत्पद्यते। एवं बुद्धिलक्षणमहङ्कारलक्षणमुच्यते ॥ २३ ॥

अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्त्तते सर्गः।
एकादशकश्च गणस्तन्मात्रः पञ्चकश्चैव ॥ २४ ॥
सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥

---

एकादशकश्च गण एकादशेन्द्रियाणि तथा तन्मात्रो गणः पञ्चकः पञ्चलक्षणोपेतः शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्रलक्षणोपेतः किंलक्षणात् सर्ग इत्येतदाह ॥ २४ ॥

सत्त्वेनाभिभूते यदा रजस्तमसी अहङ्कारे भवतस्तदा सोऽहङ्कारः सात्त्विकस्तस्य च पूर्वाचार्य्यैः सञ्ज्ञा कृता वैकृत इति। तस्माद्विकृतादहङ्कारादेकादशक इन्द्रियगण उत्पद्यते। तस्मात् सात्त्विकानि विशुद्धानीन्द्रियाणि स्वविषयसमर्थानि तस्मादुच्यते सात्त्विक एकादशक इति। किञ्चान्यद् भूतादेस्तन्मात्रः स तामसः तमसाभिभूते सत्त्वरजसी अहङ्कारे यदा भवतः सोऽहङ्कारस्तामस उच्यते तस्य पूर्वाचार्य्यैः कृता सञ्ज्ञा भूतादिस्तस्माद् भूतादेरहङ्कारात्तन्मात्रः पञ्चको गण उत्पद्यते भूतानामादिभूतस्तमोबहुलस्तेनोक्तः स तामस इति। तस्माद् भूतादेः पञ्चतन्मात्रको गणः किञ्च तैजसादुभयं यदा रजसाभिभूते सत्त्वतमसी भवतस्तदा तस्मात् सोऽहङ्कारस्तैजस इति संज्ञां लभते तस्मात्तैजसादुभयमुत्पद्यते। उभयमिति एकादशो गणस्तन्मात्रः पञ्चकः। सोऽयं सात्त्विकोऽहङ्कारो वैकृतिको विकृतो भूत्वा एकादशेन्द्रियाण्युत्पादयति स तैजसमहङ्कारं सहाय गृह्णाति सात्त्विको निष्क्रियः स तैजसयुक्त इन्द्रियोत्पत्तौ समर्थः तथा तामसोऽहङ्कारो भूतादिः

बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनस्पर्शनकानि ।
वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः ॥२६॥
उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियञ्च साधर्म्यात्

---

सञ्चितो निष्क्रियस्तैजसेनाहङ्कारेण क्रियावता युक्तस्तन्मात्राण्युत्पादयति तेनोक्तं तैजसादुभयमिति एवं तैजसेनाहङ्कारेणेन्द्रियाण्येकादश पञ्चतन्मात्राणि कृतानि भवन्ति सात्त्विक एकादशक इत्युक्तो यो वैकृतात् सात्त्विकादहङ्कारादुत्पद्यते तस्य का संज्ञेत्याह ॥ २५ ॥

चक्षुरादीनि स्पर्शनपर्यन्तानि बुद्धीन्द्रियाण्युच्यन्ते। स्पृशत्यनेनेति स्पर्शनं त्वगिन्द्रियं तद्वाची शिवः स्पर्शनशब्दोऽस्ति तेनेदं पठ्यते स्पर्शनकानीति शब्दस्पर्शरूपरसगन्धान् पञ्च विषयान् बुध्यन्ते अवगच्छन्तीति पञ्चबुद्धीन्द्रियाणि। वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः कर्म कुर्वन्तीति कर्मेन्द्रियाणि। तत्र वाग्वदति हस्तौ नानाव्यापारं कुरुतः पादौ गमनागमनं पायुरुत्सर्गं करोति उपस्थ आनन्दं प्रजोत्पत्त्या। एवं बुद्धीन्द्रियकर्मेन्द्रियभेदेन दशेन्द्रियाणि व्याख्यातानि मन एकादशकं किमात्मकं किंस्वरूपं चेति तदुच्यते ॥ २६ ॥

अथेन्द्रियवर्गे मन उभयात्मकं बुद्धीन्द्रियेषु बुद्धीन्द्रियवत् कर्मेन्द्रियेषु कर्मेन्द्रियवत् कस्मात् बुद्धीन्द्रियाणां प्रवृत्तिं कल्पयति कर्मेन्द्रियाणां च तस्मादुभयात्मकं मनः सङ्कल्पयतीति सङ्कल्पकम्। किञ्चान्यदिन्द्रियं च साधर्म्यात् समानधर्मभावात् सात्त्विकादहङ्काराद्बुद्धीन्द्रियाणि कर्मेन्द्रियाणि मनसा सहोत्पद्यमानानि मनसः साधर्म्यं प्रति तस्मात्साधर्म्यान्मनोऽपीन्द्रियमेवमेतान्येकादशेन्द्रियाणि सात्त्विकाद्वैकृतादहङ्कारा

गुणपरिणामविशेषान्नानात्वं वाह्यभेदाश्च ॥२७॥

---

दुत्पन्नानि। तत्र मनसः का वृत्तिरिति। सङ्कल्पो वृत्तिः। बुद्धीन्द्रियाणां शब्दादयो वृत्तयः कर्मेन्द्रियाणां वचनादयोऽथै-तानीन्द्रियाणि भिन्नानि भिन्नार्थग्राहकाणि किमीश्वरेण उत स्वभावेन कृतानि यतः प्रधानबुद्ध्यहङ्कारा अचेतना पुरुषो-ऽप्यकर्त्तेत्यत्राह। इह साङ्ख्यानां स्वभावो नाम कश्चित्कारण-मस्ति। अत्रोच्यते गुणपरिणामविशेषान्नानात्वं वाह्यभे-दाश्च। इमान्येकादशेन्द्रियाणि शब्दस्पर्शरूपरसगन्धाः पञ्चानां वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानां सङ्कल्पश्च मनस एव-ते भिन्नानामेवेन्द्रियाणामर्थाः गुणपरिणामविशेषात् गुणानां परिणामो गुणपरिणामस्तस्य विशेषादिन्द्रियाणां नानात्वं वाह्यार्थभेदाश्च। अथैतन्नानात्वं नेश्वरेण नाहङ्कारेण न बुद्ध्या न प्रधानेन न पुरुषेण स्वभावात् कृतगुणपरिणामेनेति। गुणा-नामचेतनत्वान्न प्रवर्त्तते प्रवर्त्तत एव कथं वक्ष्यतीहैव वत्सवि-वृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य पुरुषस्य विमोक्षार्थं तथा प्रवृत्तिः प्रधानस्य। एवमचेतना गुणा एकादशेन्द्रियभावेन प्रवर्त्तन्ते विशेषोऽपि तत्कृत एव येनोच्चैः प्रदेशे चक्षुः स्वलो-कनाय स्थितं तथा घ्राणं तथा श्रोत्रं तथा जिह्वा स्वदेशे स्वार्थ-ग्रहणाय। एवं कर्मेन्द्रियाण्यपि यथायथं स्वार्थसमर्थानि स्वदेशावस्थितानि स्वभावतो गुणपरिणामविशेषादेव न तदर्था अपि यत उक्तं शास्त्रान्तरे। गुणा गुणेषु वर्त्तन्ते गुणानां या वृत्तिः सा गुणविषया एवेति वाह्यार्था विज्ञेया गुणकृता एवेत्यर्थः। प्रधानं यस्य कारणमिति। अथेन्द्रि-यस्य कास्य का वृत्तिरित्युच्यते ॥ २७ ॥

रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥२८॥
स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥२९॥

---

मात्रशब्दो विशेषार्थः। अविशेषव्यावृत्त्यर्थो यथा भिक्षामात्रं लभ्यते नान्यो विशेष इति। तथा चक्षू रूपमात्रे न रसादिषु एवं शेषाण्यपि तद्यथा चक्षुषो रूपं जिह्वाया रसो घ्राणस्य गन्धः श्रोत्रस्य शब्दः त्वचः स्पर्शः। एवमेषां बुद्धीन्द्रियाणां वृत्तिः कथिता कर्मेन्द्रियाणां वृत्तिं कथयति वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानां कर्मेन्द्रियाणामित्यर्थः। वाचो वचनं हस्तयोरादानं पादयोर्विहरणं पायोर्भुक्ताहारस्य परिणतमलोत्सर्ग उपस्थस्यानन्दः सुतोत्पत्तिविषया वृत्तिरिति सम्बन्धः। अधुना बुद्ध्यहङ्कारमनसामुच्यते। २८।

स्वलक्षणस्वभावा स्वालक्षण्या। अध्यवसायो बुद्धिरिति लक्षणमुक्तं सैव बुद्धिवृत्तिः। तथाऽभिमानोऽहङ्कार इत्यभिमानलक्षणोऽभिमानवृत्तिश्च। सङ्कल्पकं मन इति लक्षणमुक्तं तेन सङ्कल्प एव मनसो वृत्तिः। त्रयस्य बुद्ध्यहङ्कारमनसां स्वालक्षण्या वृत्तिरसामान्या या प्रागभिहिता बुद्धीन्द्रियाणां च वृत्तिः साऽप्यसामान्यैवेति। इदानीं सामान्या वृत्तिराख्यायते। सामान्यकरणवृत्तिः सामान्येन करणानां वृत्तिः प्राणाद्या वायवः पञ्च प्राणापानसमानोदानव्याना इति पञ्च वायवः सर्वेन्द्रियाणां सामान्या वृत्तिरित्यर्थः। प्राणो नाम वायुर्मुखनासिकान्तर्गोचरस्तस्य यत् स्पन्दनं कर्म तत् त्रयोदशविधस्यापि सामान्या वृत्तिः सति प्राणे यस्मात् करणा

युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा।
दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥३०॥

नामात्मलाभ इति। प्राणोऽपि पञ्जरशकुनिवत् सर्वस्य चलन करोतीति। प्राणनात् प्राण इत्युच्यते। तथाऽपगयनादपानस्तत्र यत् स्पन्दनं तदपि सामान्यवृत्तिरिन्द्रियस्य। तथा समानो मध्यदेशवर्त्ती य आहारादिनयनात्सम नयनात् समानो वायुस्तत्र यत् स्पन्दनं तत् सामान्यकरणवृत्ति। तथा ऊर्द्धारोहणादुत्कर्षादुन्नयनाद्वा उदानो नाभिदेशमस्तकान्तर्गोचरस्तत्रोदाने यत् स्पन्दन तत् सर्वेन्द्रियाणा सामान्या वृत्तिः। किञ्च शरीरव्याप्तिरभ्यन्तरविभागश्च येन क्रियतेऽसौ शरीरव्याप्याकाशवद्व्यानस्तत्र यत् स्पन्दन तत् करणजालस्य सामान्या वृत्तिरिति। एवमेते पञ्च वायवः सामान्यकरणवृत्तिरिति व्याख्याता त्रयोदशविधस्यापि करणसामान्या वृत्तिरित्यर्थः ॥ २९॥

युगपच्चतुष्टयस्य बुद्ध्यहङ्कारमनसामेकैकेन्द्रियसम्बन्धे सति चतुष्टय भवति चतुष्टयस्य दृष्टे प्रतिविषयाध्यवसाये युगपद्वृत्तिर्बुद्ध्यहङ्कारमनश्चक्षूंषि युगपदेककाल रूप पश्यति स्थाणुरयमिति। बुद्ध्यहङ्कारमनोजिह्वा युगपद्रस गृह्णन्ति। बुद्ध्यहङ्कारमनोघ्राणानि युगपद्गन्ध गृह्णन्ति। तथा त्वक्श्रोत्रे अपि। किञ्च क्रमशश्च तस्य निर्दिष्टा तस्येति चतुष्टयस्य क्रमश्च वृत्तिर्भवति। यथा कश्चित् पथि गच्छन् दूरादेव दृष्ट्वा स्थाणुरयं पुरुषो वेति संशये सति तत्रोपरूढा तल्लिङ्ग पश्यति शकुनिं वा ततो तस्य मनसा सङ्कल्पिते संशये व्यवच्छेदभूता बुद्धिर्भवति स्थाणुरयमित्यतोऽहङ्कारश्च निश्चयार्थं स्थाणुरेवेत्येव बुद्ध्यहङ्कारमनश्चक्षुषा क्रमशो वृत्तिर्दृष्टा यथा रूपे तथा शब्दा-

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित् कार्य्यते करणम् ॥३
करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्
कार्य्यं च तस्य दशधाहार्य्यं धार्य्यं प्रकाश्यञ्च ॥३

---

दिष्वपि योज्या दृष्टे दृष्टविषये। क्रमशश्चाप्यदृ
त्रयस्य तत्पूर्विका वृत्तिरदृष्टेऽनागतेऽतीते च काले बुद्ध्य
हङ्कारमनसां रूपे चक्षुःपूर्विका क्रमश वृत्तिः स्पर्शे त्वक्पूर्विक
गन्धे घ्राणपूर्विका रसे रसनपूर्विका शब्दे श्रवणपूर्विका बुद्ध्य
हङ्कारमनसामनागते भविष्यति काले अतीते च तत्पूर्विक
त्रयाणां वृत्तिर्वर्तमाने युगपत् क्रमशश्चेति। किञ्च ॥३ ।

स्वां स्वामिति योज्या बुद्ध्यहङ्कारमनांसि स्वां स्वां वृत्ति
परस्पराकूतहेतुकामाकूतादरसम्भ्रम इति प्रतिपद्यन्ते पुरु
षार्थकरणाय। बुद्ध्यहङ्कारादयो बुद्ध्यहङ्काराकूतं ज्ञात्वा
स्वस्वविषयं प्रतिपद्यन्ते किमर्थमिति चेत् पुरुषार्थ एव हेतु
पुरुषार्थः कर्तव्य इत्येवमर्थं गुणानां प्रवृत्तिस्तस्मादेतानि कर
णानि पुरुषार्थं प्रकाशयन्ति कथं स्वयं प्रवर्तन्ते न केनचित्
कार्यं ते करणं पुरुषार्थ एवैनं कारयतीति वाक्यार्थो न केन
चिदीश्वरेण पुरुषेण कार्यते प्रबोध्यते करणम्। बुद्ध्यादि
कतिविधं तदित्याह ॥ ३१ ॥

करणं महदादि त्रयोदशविधं बोद्धव्यं पञ्चबुद्धीन्द्रियाणि
चक्षुरादीनि पञ्चकर्मेन्द्रियाणि वागादीनीति त्रयोदशवि
करणं तत् किं करोतीत्यत आह तदाहरणधारणप्रकाशकरम्।
तत्राहरणं धारणं च कर्मेन्द्रियाणि कुर्वन्ति प्रकाशं बुद्धी

अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यं
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३

न्द्रियाणि। कतिविधं कार्यं तस्येति तदुच्यते। कार्यं च तस्य दशधा तस्य करणस्य कार्यं कर्त्तव्यमिति दशधा दशप्रकारं शब्दस्पर्शरूपरसगन्धाख्यं वचनादानविहरणोत्सर्गानन्दाख्यमेतद्दशविधं कार्यं बुद्धीन्द्रियैः प्रकाशितं कर्मेन्द्रियाण्याहरन्ति धारयन्ति चेति ॥ ३२ ॥

अन्तःकरणमिति बुद्ध्यहङ्कारमनांसि त्रिविधं महदादिभेदात्। दशधा बाह्यं च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च दशविधमेतत् करणं बाह्यं तत्र यस्यान्तःकरणस्य विषयाख्यं बुद्ध्यहङ्कारमनसां भोग्यं साम्प्रतकालं श्रोत्रं वर्त्तमानमेव शब्दं शृणोति नातीतं न च भविष्यन्तं चक्षुरपि वर्त्तमानं रूपं पश्यति नातीतं नानागतं त्वग्वर्त्तमानं स्पर्शं जिह्वा वर्त्तमानं रसं नासिका वर्त्तमानं गन्धं नातीतानागतं चेति। एवं कर्मेन्द्रियाणि वाग्वर्त्तमानं शब्दमुच्चारयति नातीतं नानागतं पाणी वर्त्तमानं घटमाददाते नातीतमनागतं च पादौ वर्त्तमानं पन्थानं विहरतो नातीतं नाप्यनागतं पायूपस्थौ च वर्त्तमानावुत्सर्गानन्दौ कुरुतो नातीतौ नानागतौ। एवं बाह्यं करणं साम्प्रतकालमुक्तं त्रिकालमाभ्यन्तरं करणं बुद्ध्यहङ्कारमनांसि त्रिकालविषयाणि बुद्धिर्वर्त्तमानं घटं बुध्यते अतीतमनागतं चेति। अहङ्कारो वर्त्तमानेऽभिमानं करोत्यतीतेऽनागते च। तथा मनो वर्त्तमाने सङ्कल्पं कुरुते अतीतेऽनागते च एवं त्रिकालमाभ्यन्तरं करणमिति। इदानीमिन्द्रियाणि कति सविशेषं विषयं गृह्णन्ति। कानि निर्विशेषमिति तदुच्यते ॥ ३३ ॥

बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।
वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि
॥ ३४ ॥

सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥३५॥

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥३६॥

---

बुद्धीन्द्रियाणि तानि सविशेषं विषयं गृह्णन्ति सविशेषं विषयं मानुषाणां शब्दस्पर्शरूपरसगन्धात्मकं सुखदुःखमोहविषययुक्तम् बुद्धीन्द्रियाणि प्रकाशयन्ति देवानां निर्विशेषान् विषयान् प्रकाशयन्ति तथा कर्मेन्द्रियाणां मध्ये वाग्भवति शब्दविषया देवानां मानुषाणां च वाग्वदति श्लोकादीनुच्चारयति तस्माद्देवानां मानुषाणां च वागिन्द्रियं तुल्यं शेषाण्यपि वाग्व्यतिरिक्तानि पाणिपादपायूपस्थसंज्ञितानि पञ्चविषयाणि पञ्च विषयाः शब्दादयो येषां तानि पञ्चविषयाणि शब्दस्पर्शरूपरसगन्धाः पाणौ सन्ति पञ्चशब्दादिलक्षणायां भुवि पादो विहरति पाय्विन्द्रियं पञ्चात्मकमुत्सर्गं करोति तथोपस्थेन्द्रियं पञ्चलक्षणं शुक्रमानन्दयति ॥ ३४ ॥

सान्तःकरणा बुद्धिरहङ्कारमनःसहितेत्यर्थः यस्मात् सर्वं विषयमवगाहते गृह्णाति त्रिष्वपि कालेषु शब्दादीन् गृह्णाति तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि शेषाणि करणानीति वाक्यशेषः । किञ्चान्यत् ॥ ३५ ॥

यानि करणान्युक्तानि एते गुणविशेषाः किं विशिष्टाः

सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम्
॥ ३७ ॥

तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥३८॥

---

प्रदीपकल्पा प्रदीपवद्विषयप्रकाशकाः परस्परविलक्षणा असदृशा भिन्नविषया इत्यर्थः। गुणविषया इत्यर्थ। गुणविशेषा गुणेभ्यो जाता.। कृत्स्नं पुरुषस्यार्थं बुद्धीन्द्रियाणि कर्मेन्द्रियाण्यहङ्कारो मनश्चैतानि स्वं स्वमर्थं पुरुषस्य प्रकाश्य बुद्धौ प्रयच्छन्ति बुद्धिस्थं कुर्वन्तीत्यर्थः। यतो बुद्धिस्थं सर्वं विषयं सुखादिकं पुरुष उपलभते । इदञ्चान्यत् ॥ ३६ ॥

सर्वेन्द्रियगत त्रिष्वपि कालेषु सर्वं प्रत्युपभोगमुपभोग प्रति देवमनुष्यतिर्य्यग्बुद्धीन्द्रियकर्मेन्द्रियद्वारेण सान्त करणा बुद्धिः साधयति सम्पादयति यस्मात् तस्मात् सैव च विशिनष्टि प्रधानपुरुषयोर्विषयविभाग करोति प्रधानपुरुषान्तरं नानात्वमित्यर्थः सूक्ष्ममित्यनधिकृततपश्चरणैरप्राप्यमिय प्रकृतिः सत्वरजस्तमसा साम्यावस्था इयं बुद्धिरयमहङ्कार एतानि पञ्च तन्मात्राण्येकादशेन्द्रियाणि पञ्चमहाभूतान्ययमन्य पुरुष एभ्यो व्यतिरिक्त इत्येव बोधयति बुद्धिर्यस्यावापादपवर्गो भवति । पूर्वमुक्त विशेषा विशेषविषयाणि तत् के विषयास्तञ्च दर्शयति ॥ ३७ ॥

यानि पञ्च तन्मात्राण्यहङ्कारादुत्पद्यन्ते ते शब्दतन्मात्रं स्पर्शतन्मात्र रूपतन्मात्र रसतन्मात्र गन्धतन्मात्रमेतान्यविशेषा उच्यन्ते देवानामेते सुखलक्षणा विषया दुःखमोहरहितास्तेभ्य.

सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते ॥३९॥

---

पञ्चभ्यस्तन्मात्रेभ्यः पञ्चमहाभूतानि पृथिव्यप्तेजोवाय्वाकाशसंज्ञानि यान्युत्पद्यन्ते। एते स्मृता विशेषाः। गन्धतन्मात्रात् पृथिवी रसतन्मात्रादापो रूपतन्मात्रात्तेजः स्पर्शतन्मात्राद्वायुः शब्दतन्मात्रादाकाशमित्येवमुत्पद्यन्ते तानि महाभूतान्येते विशेषा मानुषाणां विषयाः शान्ताः सुखलक्षणा घोरा दुःखलक्षणा मूढा मोहजनका यथाकाशं कस्यचिदनवकाशादन्तर्गृहादेर्निर्गतस्य सुखात्मकं शान्तं भवति तदेव शीतोष्णवातवर्षाभिभूतस्य दुःखात्मकं घोरं भवति तदेव पन्थानं गच्छतो वनमार्गाद् महतो दिङ्मोहान्मूढं भवति। एवं वायुर्धर्मार्तस्य शान्तो भवति शीतार्तस्य घोरो धूलीशर्करावमिश्रोऽतिवान् मूढ इति। एवं तेजःप्रभृतिषु द्रष्टव्यम्। अथान्ये विशेषाः ॥३८॥

सूक्ष्मास्तन्मात्राणि यत्सङ्गृहीतं तन्मात्रिकं सूक्ष्मशरीरं महदादिलिङ्गं सदा तिष्ठति संसरति च ते सूक्ष्मास्तथा मातापितृजाः स्थूलशरीरोपचायका ऋतुकाले मातापितृसंयोगे शोणितशुक्रमिश्रीभावेनोदरान्तः सूक्ष्मशरीरस्योपचयं कुर्वन्ति तत् सूक्ष्मशरीरं पुनर्मातुरशितपीतनानाविधरसेन नाभिनिबन्धेनाप्यायते तथाप्यारब्धं शरीरं सूक्ष्मैर्मातापितृजैश्च सह महाभूतैस्त्रिधा विशेषैः पृष्ठोदरजङ्घाकट्युरःशिरःप्रभृति षाट्कौशिकं पाञ्चभौतिकं रुधिरमांसस्नायुशुक्रास्थिमज्जासंयुतमाकाशादवकाशदानाद्वायुर्वर्धनात् तेजः पाकादापः संग्रहात् पृथिवी धारणात् समस्तावयवोपेतं मातुरुदरात् बहिर्भवति। एवमेते त्रिविधा विशेषाः स्युः। अत्राह के नित्याः के वा

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम्।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्॥४०

---

अनित्याः सूक्ष्मास्तेषां नियताः सूक्ष्मास्तन्मात्रसञ्ज्ञकास्तेषां मध्ये नियता नित्यास्तैरारब्धं शरीरं कर्मवशात् पशुमृगपक्षिसरीसृपस्थावरजातिषु संसरति धर्मवशादिन्द्रकादिलोकेष्वेवमेतन्नियतं सूक्ष्मशरीरं सरति यावत् ज्ञानमुत्पद्यते उत्पन्ने ज्ञाने विद्वाञ्छरीरं त्यक्त्वा मोक्षं गच्छति तस्मादेते विशेषाः सूक्ष्मा नित्या इति मातापितृजा निवर्त्तन्ते तत् सूक्ष्मशरीरं परित्यज्येहैव प्राणत्यागवेलायां मातापितृजा निवर्त्तन्ते मरणकाले मातापितृजं शरीरमिहैव निवर्त्य भूम्यादिषु प्रलीयते यथा तत्त्वं सूक्ष्मं च कथं संसरति तदाह॥ ३९॥

यदा लोका अनुत्पन्नाः प्रधानादिसर्गे तदा सूक्ष्मशरीरमुत्पन्नमिति। किञ्चान्यदसक्तं न संयुक्तं तिर्य्यग्योनिदेवमानुषस्थानेषु सूक्ष्मत्वात् कुत्रचिदसक्तं पर्वतादिषु अप्रतिहतप्रसरं सरति गच्छति। नित्यं यावन्न ज्ञानमुत्पद्यते तावत् संसरति तच्च महदादिसूक्ष्मपर्य्यन्तं महानादौ यस्य तन्महदादि बुद्धिरहङ्कारो मन इति पञ्चतन्मात्राणि सूक्ष्मपर्य्यन्तं तन्मात्रपर्य्यन्तं संसरति शूलग्रहपिपीलिकावत् त्रीनपि लोकान्। निरुपभोगं भोगरहितं तत् सूक्ष्मशरीरं पितृमातृजेन बाह्येनोपचयेन क्रियाधर्मग्रहणाद्भोगेषु समर्थं भवतीत्यर्थं। भावैरधिवासितं पुरस्ताद्भावान् धर्मादीन् वक्ष्यामस्तैरधिवासितमुपरञ्जितं लिङ्गमिति। प्रलयकाले महदादिसूक्ष्मपर्य्यन्तं करणोपेतं प्रधाने लीयते असंसरयुक्तं सदा सर्गकालमत्र वर्त्तते प्रकृतिमोहबन्धनबद्धं सत् संसरणादिक्रियास्वसमर्थमिति

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो यथा विना छाया
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥४१॥
पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन।
प्रकृतेर्विभुत्वयोगान्नटवद् व्यवतिष्ठते लिङ्गम् ॥४२॥

---

पुनः सर्वत्रात्रे संसरति तस्मादिदं सूक्ष्मम्। किं प्रयोजनेन त्रयोदशविधं करणं संसरतीत्येवं चोदिते सत्याह ॥ ॥

चित्रं यथा कुड्याश्रयमृते न तिष्ठति स्थाण्वादिभ्यः कीलकादिभ्यो विना छाया न तिष्ठति तैर्विना न भवत्यादिग्रहणात् आपश्च शैत्यं विना नापो भवन्ति शैत्यं चाद्भिर्विना। अग्निरुष्णं विना वायुः स्पर्शं विना आकाशमवकाशं विना पृथिवी गन्धं विना तद्वदेतेन दृष्टान्तेन न्यायेन विना विशेषैरविशेषैस्तन्मात्रैर्विना न तिष्ठति। अथ विशेषभूतान्युच्यन्ते शरीरं पञ्चभूतमयं विशेषैर्विना शरीरेण विना क्व लिङ्गस्यावस्थानं चेति च एकदेहमुज्झति तदैवान्यमाश्रयति निराश्रयमाश्रयरहितं लिङ्गं त्रयोदशविधं करणमित्यर्थः। किमर्थं तदुच्यते ॥४१॥

पुरुषार्थः कर्त्तव्य इति प्रधानं प्रवर्त्तते स च द्विविधः शब्दाद्युपलब्धिलक्षणो गुणपुरुषान्तरोपलब्धिलक्षणश्च। शब्दाद्युपलब्धिर्ब्रह्मादिषु लोकेषु गन्धादिभोगावाप्तिः। गुणपुरुषान्तरोपलब्धिर्मोक्ष इति। तस्मादुक्तं पुरुषार्थहेतुकमिदं सूक्ष्मशरीरं प्रवर्त्तत इति। निमित्तनैमित्तिकप्रसङ्गेन निमित्तं धर्मादि नैमित्तिकमूर्ध्वगमनादि पुरस्तादेव वक्ष्यामः प्रसङ्गेन प्रसक्त्या प्रकृतेः प्रधानस्य विभुत्वयोगाद्यथा राजा स्वराष्ट्रे विभुत्वाद्यदिच्छति तत्तत् करोतीति तथा प्रकृतेः सर्वत्र

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिकाश्च धर्माद्याः**
**दृष्टाः करणाश्रयिणः कार्य्याश्रयिणश्च कललाद्याः ॥४३**

---

विभुत्वयोगान्निमित्तनैमित्तिकप्रसङ्गेन व्यवतिष्ठते पृथक् पृथग्देहधारणे लिङ्गस्य व्यवस्थां करोति। लिङ्गं सूक्ष्मैः परमाणुभिस्तन्मात्रैरुपचितं शरीरं त्रयोदशविधकरणोपेतं मानुषदेवतिर्य्यग्योनिषु व्यवतिष्ठते कथं नटवत् यथा नटः पटान्तरेण प्रविश्य देवो भूत्वा निर्गच्छति पुनर्मानुषः पुनर्विदूषकः। एवं लिङ्गं निमित्तनैमित्तिकप्रसङ्गेनोदरान्तः प्रविश्य हस्ती स्त्री पुमान् भवति। भावैरधिवासितं लिङ्गं संसरतीत्युक्तं तत् के भावा इत्याह ॥ ४२ ॥

भावास्त्रिविधाश्चिन्त्यन्ते सांसिद्धिकाः प्राकृता वैकृताश्च। तत्र सांसिद्धिका यथा भगवतः कपिलस्यादिसर्गे उत्पद्यमानस्य चत्वारो भावाः सहोत्पन्ना धर्मो ज्ञानं वैराग्यमैश्वर्य्यमिति। प्राकृताः कथ्यन्ते ब्रह्मणश्चत्वारः पुत्राः सनकसनन्दनसनातनसनत्कुमारा बभूवुः तेषामुत्पन्नकार्य्यकारणानां शरीरिणां षोडशवर्षाणामेते भावाश्चत्वारः समुत्पन्नास्तस्मादेते प्राकृताः। तथा वैकृता यथा आचार्य्यमूर्त्तिं निमित्तं कृत्वाऽस्मदादीनां ज्ञानमुत्पद्यते ज्ञानाद्वैराग्यं वैराग्याद्धर्मो धर्मादैश्वर्य्यमिति। आचार्य्यमूर्त्तिरपि विकृतिरिति तस्माद्वैकृता एते भावा उच्यन्ते यैरधिवासितं लिङ्गं संसरत्येते चत्वारो भावाः सात्त्विकास्तामसा विपरीताः सात्त्विकमेतद्रूपं तामसमस्माद्विपर्य्यस्तमित्यत्र व्याख्याता एवमष्टौ धर्मो ज्ञानं वैराग्यमैश्वर्य्यमधर्मोऽज्ञानमवैराग्यमनैश्वर्य्यमित्यष्टौ भावाः। क्व वर्त्तन्ते दृष्टाः करणाश्रयिणो बुद्धिः करणं तदाश्रयिणः। एतदुक्तमध्यवसायो बुद्धिः धर्मो ज्ञानमिति कार्य्यं देहस्तदाश्रयाः कललाद्या ये

एष प्रत्ययसर्गो विपर्य्ययाशक्तितुष्टिसिद्ध्याख्यः।
गुणवैषम्यविमर्दात्तस्य च भेदास्तु पञ्चाशत्॥४६॥

---

यद्दिव्यं मानुष सुखमनुभवाम्येतस्माद्राजसाद्रागात् संसारो भवति। तथा ऐश्वर्य्यादविघात एतदैश्वर्य्यमष्टगुणमणिमादियुक्तं तस्मादैश्वर्य्यनिमित्तादविघातो नैमित्तिको भवति ब्रह्मादिषु स्थानेष्वैश्वर्य्यं न विहन्यते। किञ्चान्यद्विपर्य्ययाद्विपर्य्यासः तस्याविघातस्य विपर्य्यासो विघातो भवत्यनैश्वर्य्यात् सर्वत्र विहन्यते। एष निमित्तैः सह नैमित्तिक. षोडशविधो व्याख्यात. स किमात्मक इत्याह॥ ४५॥

यथा एष षोडशविधो निमित्तनैमित्तभेदो व्याख्यात एष प्रत्ययसर्ग उच्यते। प्रत्ययो बुद्धिरित्युक्ताऽध्यवसायो बुद्धिधर्मो ज्ञानमित्यादि स च प्रत्ययसर्गश्चतुर्धा भिद्यते विपर्य्ययाशक्तितुष्टिसिद्ध्याख्याभेदात्। तत्र संशयोऽज्ञानम्। यथा कस्यचित् स्थाणुदर्शने स्थाणुरयं पुरुषो वेति संशयः। अशक्तिर्यथा। तमेव स्थाणुं सम्यग् दृष्ट्वा संशय छेत्तुं न शक्नोतीत्यशक्तिः। एवं तृतीयस्तुष्ट्याख्यो यथा। तमेव स्थाणुं ज्ञातुं संशयितु वा नेच्छति किमनेनास्माकमित्येषा तुष्टिः। चतुर्थः सिद्ध्याख्यो यथा। आनन्दितेन्द्रियः स्थाणुमारूढ़ां वल्लिं पश्यति शकुनि वा तस्य सिद्धिर्भवति स्थाणुरयमिति। एवमस्य चतुर्विधस्य प्रत्ययसर्गस्य गुणवैषम्यविमर्दे तस्य भेदास्तु पञ्चाशत् योऽय सत्वरजस्तमोगुणाना वैषम्यो विमर्द. तेन तस्य प्रत्ययसर्गस्य पञ्चाशद्भेदा भवन्ति तथा क्वापि सत्वमुत्कट भवति रजस्तमसी उदासीने क्वापि रजः क्वापि तम इति भेदाः कथ्यन्ते॥ ४६॥

पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात्।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥४७॥
भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥४८॥

---

पञ्च विपर्ययभेदास्ते यथा तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इत्येषां भेदानां नानात्वं वक्ष्यमाणमेवेति। अशक्तेश्चाष्टाविंशतिभेदा भवन्ति करणवैकल्यात् तानपि वक्ष्यामस्तथा च तुष्टिर्नवधा वक्ष्योत्तरेषु तामसानि नामानि। तथाष्टविधा सिद्धिः सात्त्विकानि नामानि तानि वक्ष्योत्तरेषु। एतत् क्रमेणैव वक्ष्यते तत्र विपर्ययभेदा उच्यन्ते ॥४७॥

तमसस्तावद्भेदः प्रलयोऽज्ञानादिमध्ये योऽष्टासु प्रकृतिषु लीयते प्रधानबुद्ध्यहङ्कारपञ्चतन्मात्राख्यासु तत्र लीनमात्मानं मन्यते मुक्तोऽहमिति तमोभेद एषोऽष्टविधः मोहस्य भेदोऽष्टविध एवेत्यर्थः। यस्मादष्टगुणमणिमाद्यैश्वर्यं तत्र सङ्गादिन्द्रादयो देवा न मोक्षं प्राप्नुवन्ति पुनश्च तत्क्षये ममत्वं सोऽष्टविधो मोह इति। दशविधो महामोहः शब्दस्पर्शरूपरसगन्धा देवानामेते पञ्चविषयाः सुखलक्षणा मानुषाणामप्येते एव शब्दादयः पञ्चविषया एवमेतेषु दशसु महामोह इति। तामिस्रोऽष्टादशधाऽष्टविधमैश्वर्यं दृष्टानुश्रविका विषया दश एतेषामष्टादशानां सम्पदमनुनन्दन्ति विपदं नानुमोदन्तेऽयमष्टादशविधो विकल्पस्तामिस्रः। यथा तामिस्रमष्टगुणमैश्वर्यं दृष्टानुश्रविका दशविषयास्तथान्धतामिस्रोऽप्यष्टादशभेद एवं किन्तु विषयसम्पत्तौ सम्भोगकाले

एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा।
सप्तदशवधा बुद्धेर्विपर्य्ययात् तुष्टिसिद्धीनाम् ॥४९॥
आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः।
बाह्या विषयोपरमात्पञ्च नव तुष्टयोऽभिमताः॥५०

---

य एव म्रियतेऽष्टगुणैश्वर्य्याद्वा भ्रश्यते ततस्तस्य महद् दुःख-मुत्पद्यते सोऽन्धतामिस्र इति। एवं विपर्य्ययभेदास्तम-प्रभृतयः पञ्च प्रत्येकं भिद्यमाना द्विषष्टिभेदाः सञ्जाता इति। अशक्तिभेदाः कथ्यन्ते ॥ ४८ ॥

भवन्त्यशक्तेश्च करणवैकल्यादष्टाविंशतिभेदा इत्युद्दिष्ट तत्रैकादशेन्द्रियवधाः बाधिर्य्यमन्धताप्रसुप्तिरुपजिह्विकाघ्राण-पाको मूकता कुणित्वं खाञ्ज्य गुदावर्त्तं क्लैव्यमुन्माद इति। सह बुद्धिवधैरशक्तिरुद्दिष्टा ये बुद्धिवधास्तैः सहाशक्तेरष्टा-विंशतिभेदा भवन्ति सप्तदशवधा बुद्धेः सप्तदशवधास्ते तुष्टि-भेदसिद्धिभेदवैपरीत्येन तुष्टिभेदा नव सिद्धिभेदा अष्टौ ये ते विपरीते सह एकादशविधा एवमष्टाविंशतिविकल्पा अशक्ति-रिति विपर्य्ययात् सिद्धितुष्टीनामेव भेदक्रमो द्रष्टव्यः। तत्र तुष्टिर्नवधा कथ्यते ॥ ४९ ॥

आध्यात्मिकाश्चतस्रस्तुष्टयोऽध्यात्मनि भवा आध्यात्मिका तास्च प्रकृत्युपादानकालभाग्याख्या। तत्र प्रकृत्याख्या यथा कश्चित् प्रकृतिं वेत्ति तस्याः सगुणनिर्गुणत्वं च तेन तत्त्वं तत्-कार्य्यं विज्ञायैव केवलं तुष्टस्तस्य नास्ति मोक्ष एषा प्रकृ-त्याख्या। उपादानाख्या यथा कश्चिद्विज्ञायैव तत्वान्युपादान-ग्रहणं करोति त्रिदण्डकमण्डलुविविदिकाभ्यो मोक्ष इति तस्यापि नास्त्येषा उपादानाख्या। तथा कालाख्या कालेन

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।

मोक्षो भविष्यतीति किं तवाभ्यासेनेत्येषा कालाख्या तुष्टिः यत्र नास्ति मोक्ष इति। तथा भाग्याख्या भाग्येनैव मोक्षो भविष्यतीति भाग्याख्या। चतुर्थी तुष्टिरिति। बाह्या विषयोपरमाच्च पञ्च। बाह्यास्तुष्टयः पञ्च विषयोपरमात् शब्दस्पर्शरूपरसगन्धेभ्य उपरतोऽर्जनरक्षणक्षयसङ्गहिंसादर्शनात्। वृद्धिनिमित्तं पाशुपाल्यवाणिज्यप्रतिग्रहसेवा कार्या एतदर्जनं दुःखमर्जितानां रक्षणे दुःखमुपभोगात् क्षीयत इति क्षयदुःखम्। तथा विषयोपभोगे कृते नास्तीन्द्रियाणामुपशम इति सङ्गदोषः। तथा न अनुपहत्य भूतान्युपभोग इति हिंसादोषः। एवमर्जनादिदोषदर्शनात् पञ्चविषयोपरमात् पञ्च तुष्टयः। एवमाध्यात्मिकबाह्यभेदेन नव तुष्टयस्तासां नामानि शास्त्रान्तरे प्रोक्तानि। अम्भः सलिलं मेघो वृष्टिः सुतमो पारं सुनेत्रं नारीकमनुत्तमाम्भसिकमिति। आसां तुष्टीनां विपरीताशक्तिभेदात् तुष्टिवधा भवन्ति। तद्यथा अनम्भोऽसलिलमनोघ इत्यादिविपरीतभावाद् बुद्धिवधा इति। सिद्धिरुच्यते ॥५०॥

ऊहो यथा अविदितपूर्वं किमिह सत्यं किं परं किं नैःश्रेयसं किं कृतार्थः स्यामिति चिन्तयतो ज्ञानमुत्पद्यते प्रधानादन्य एव पुरुष इत्यन्या बुद्धिरन्योऽहंकारोऽन्यानि तन्मात्राणीन्द्रियाणि पञ्चमहाभूतानीत्येवं तत्त्वज्ञानमुत्पद्यते येन मोक्षो भवति एषा ऊहाख्या प्रथमा सिद्धिः। तथा शब्दज्ञानात् प्रधानपुरुषबुद्ध्यहंकारतन्मात्रेन्द्रियपञ्चमहाभूतविषयं ज्ञानं भवति ततो मोक्ष इत्येषा शब्दाख्या सिद्धिः। अध्ययनाद् वेदादिशास्त्राध्ययनात् पञ्चविंशतितत्त्वार्थं प्राप्य

दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥५१॥

---

मोक्षं याति इत्येषा तृतीया सिद्धिः। दुःखविघातत्रयमाध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रयविघाताय गुरुं समुपगम्य तत उपदेशान्मोक्षं यात्येषा चतुर्थी सिद्धिः। एषैव दुःखत्रयभेदात् त्रिधा कल्पनीया इति षट् सिद्धयः। तथा सुहृत्प्राप्तिर्यथा कश्चित् सुहृत् ज्ञानमधिगम्य मोक्षं गच्छति एषा सप्तमी सिद्धिः। दानं यथा कश्चिद्भगवतां प्रत्याश्रयौषधित्रिदण्डकुण्डिकादीनां ग्रासाच्छादनादीनां च दानेनोपकृत्य तेभ्यो ज्ञानमवाप्य मोक्षं यात्येषाष्टमी सिद्धिः। आसामष्टानां सिद्धीनां शास्त्रान्तरे संज्ञाः कृतास्तारं सुतारं तारतारं प्रमोदं प्रमुदितं प्रमोदमानं रम्यकं सदाप्रमुदितमिति। आसां विपर्ययाद् बुद्धेर्वधा ये विपरीतास्त अशक्तौ निक्षिप्ता यथाऽतारमसुतारमतारतारमित्यादि द्रष्टव्यमशक्तिभेदा अष्टाविंशतिरुक्तास्ते सह बुद्धिवधैरेकादशेन्द्रियवधा इति। तत्र तुष्टिविपर्यया नवसिद्धीनां विपर्यया अष्टौ एवमेते सप्तदशबुद्धिवधा एते सहेन्द्रियवधा अष्टाविंशतिरशक्तिभेदाः पश्चात् कथिता इति विपर्ययाशक्तितुष्टिसिद्धीनामेवोद्देशो निर्देशश्च कृत इति। किञ्चान्यत् सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः सिद्धेः पूर्वा या विपर्ययाशक्तितुष्टयस्ता एव सिद्धेरङ्कुशस्तद्भेदादेव त्रिविधो यथा हस्ती गृहीताङ्कुशेन वशो भवत्येवं विपर्ययाशक्तितुष्टिभिर्गृहीतो लोकोऽज्ञानमाप्नोति तस्मादेताः परित्यज्य सिद्धिः सेव्या सिद्धेस्तत्त्वज्ञानमुत्पद्यते तन्मोक्ष इति। अथ यदुक्तं भावैरधिवासितं लिङ्गं तत्र भावा धर्मादयोऽष्टावुक्ता बुद्धिपरिणामा विपर्ययाशक्तितुष्टिसिद्धिपर्यन्ताः स भावाख्यः प्रत्यय-

तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।
लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ॥५५॥
इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्य्यन्तः।

---

क्येन व्याप्तस्तत्रापि सत्वरजसी स्तः। मध्ये मानुष्ये रज उत्कटं तत्रापि सत्वतमसी विद्येते तस्माद् दुःखप्राया मनुष्या। एव ब्रह्मादिस्तम्बपर्य्यन्त' ब्रह्मादिस्थावरान्त इत्यर्थः। एवमभौतिकसर्गो लिङ्गसर्गो भावसर्गो भूतसर्गो दैवमानुषतैर्य्यग्योनय इत्येष प्रधानकृतः षोडशसर्ग. ॥ ५४ ॥

तत्रेति तेषु देवमानुषतिर्य्यग्योनिषु जराकृतं मरणकृत चैव दु ख चेतन चैतन्यवान् पुरुष प्राप्नोति न प्रधान न बुद्धिर्नाहङ्कारो न तन्मात्राणीन्द्रियाणि महाभूतानि च। कियन्त काल पुरुषो दु खं प्राप्नोतीति तद्विविनक्ति। लिङ्गस्याविनिवृत्तेर्यत्तन्महदादिलिङ्गशरीरेणाविश्य तत्र व्यक्तीभवति तद्यावन्निवर्त्तते ससारशरीरमिति सङ्क्षेपेण त्रिषु स्थानेषु पुरुषो जरामरणकृत दु ख प्राप्नोति, लिङ्गस्याविनिवृत्तेः लिङ्गस्य विनिवृत्तिं यावत्। लिङ्गनिवृत्तौ मोक्षो मोक्षप्राप्तौ नास्ति दु खमिति। तत् पुन केन निवर्त्तते यदा पञ्चविंशति तत्त्वज्ञान स्यात् सत्वपुरुषान्यथाख्यातिलक्षणमिद प्रधानमिय बुद्धिरयमहङ्कार इमानि पञ्चतन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतानि येभ्योऽन्य पुरुषो विसदृश इत्येव ज्ञानाल्लिङ्गनिवृत्तिस्ततो मोक्ष इति। प्रवृत्ते. किं निमित्तमारम्भ इत्युच्यते ॥ ५५ ॥

इत्येष परिसमाप्तौ निर्देशे च प्रकृतिकृतौ प्रकृतिकरणे प्रकृतिक्रियाया य आरम्भो महदादिविशेषभूतपर्य्यन्त, प्रकृते-

प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥५६

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥५७॥
औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्त्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम् ॥५८॥

---

महान् महतोऽहङ्कारस्तस्मात्तन्मात्राण्येकादशेन्द्रियाणि तन्मात्रेभ्यः पञ्चमहाभूतानीत्येष प्रतिपुरुषविमोक्षार्थं पुरुषं प्रति देवमनुष्यतिर्यग्भावं गतानां विमोक्षार्थमारम्भः स्वार्थ इव परार्थमारम्भः यथा कश्चित् स्वार्थं त्यक्त्वा मित्रकार्याणि करोति एवं प्रधानम्। पुरुषोऽत्र प्रधानस्य न किञ्चित् प्रत्युपकारं करोति। स्वार्थ इव न च स्वार्थः परार्थ एवार्थः शब्दादिविषयोपलब्धिर्गुणपुरुषान्तरोपलब्धिश्च त्रिषु लोकेषु शब्दादिविषयैः पुरुषा योजयितव्या अन्ते च मोक्षेणेति प्रधानस्य प्रवृत्तिस्तथा चोक्तम्। कुम्भवत् प्रधानपुरुषार्थं कृत्वा निवर्तते इति। यदोच्यतेऽचेतनं प्रधानं चेतनः पुरुष इति मया त्रिषु लोकेषु शब्दादिभिर्विषयैः पुरुषो योज्योऽन्ते मोक्षः कर्तव्य इति कथं चेतनवत् प्रवृत्तिः। सत्यं किन्त्वचेतनानामपि प्रवृत्तिर्दृष्टा निवृत्तिश्च यस्मादाह। ५६।

यथा तृणोदकं गवा भक्षितं क्षीरभावेन परिणम्य वत्सविवृद्धिं करोति पुष्टे च वत्से निवर्तते एवं पुरुषविमोक्षनिमित्तं प्रधानम्। अज्ञस्य प्रवृत्तिरिति। किञ्च। ५७।

यथा लोक इष्टौत्सुक्ये सति तस्य निवृत्त्यर्थं क्रियासु प्रवर्तते गमनागमनक्रियासु कृतकार्यो निवर्तते तथा पुरुषस्य विमोक्षार्थं शब्दादिविषयोपभोगोपलब्धिलक्षणं गुणपुरुषान्तरोप-

रङ्गस्य दर्शयिता निवर्त्तते नर्त्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य निवर्त्तते प्रकृतिः ॥५९
नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥६०॥
प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥६१॥

---

लब्धिलक्षण च द्विविधमपि पुरुषार्थं कृत्वा प्रधान निवर्त्तते। किञ्चान्यत् ॥ ५८ ॥

यथा नर्त्तकी शृङ्गारादिरसैरितिहासादिभावैश्च निबद्धगीतवादित्रवृत्तानि रङ्गस्य दर्शयित्वा कृतकार्य्या नृत्यान्निवर्त्तते तथा प्रकृतेरपि पुरुषस्यात्मान प्रकाश्य बुद्ध्यहङ्कारतन्मात्रेन्द्रियमहाभूतभेदेन निवर्त्तते। कथ को वा स्यान्निवर्त्तकौ हेतुस्तदाह ॥ ५९ ॥

नानाविधैरुपाये प्रकृतिः पुरुषस्योपकारिण्यनुपकारिणः पुंस' कथ देवमानुषतिर्य्यग्भावेन सुखदुःखमोहात्मकभावेन शब्दादिविषयभावेन एव नानाविधैरुपायैरात्मानं प्रकाश्याहमन्या त्वमन्य इति निवर्त्तत अतो नित्यस्य तस्यार्थमपार्थं कुरुते चरति च यथा कश्चित् परोपकारी सर्वस्योपकुरुते नात्मन प्रत्युपकारमीहत एव प्रकृतिः पुरुषार्थं चरति करोत्यपार्थकम्। पश्चादुक्तमात्मान प्रकाश्य निवर्त्तते निवृत्ता च कि करोतीत्याह ॥ ६० ॥

लोके प्रकृते सुकुमारतर न किञ्चिदस्तीत्येवं मे मतिर्भवति येन परार्थ एव मतिरुत्पन्ना कस्मादहमनेन पुरुषेण दृष्टास्मीत्यस्य पुंसो पुनर्दर्शनं नोपैति पुरुषस्यादर्शनमुपयातीः

रूपैः सप्तभिरेव बध्नात्यात्मानमात्मना प्रकृतिः।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥६३॥
एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥६४॥

---

मुच्यते संसरति चेति। अथ मुक्त एव स्वभावात् स सर्वगतश्च कथं संसरत्यप्राप्तप्रापणार्थं संसरणमिति तेन पुरुषो बध्यते पुरुषो मुच्यते संसरति व्यपदिश्यते येन संसारित्वं न विद्यते सत्वपुरुषान्तरज्ञानात् तत्त्वं पुरुषस्याभिव्यज्यते। तदभिव्यक्तौ केवलः शुद्धो मुक्तः स्वरूपप्रतिष्ठः पुरुष इति। अत्र यदि पुरुषस्य बन्धो नास्ति ततो मोक्षोऽपि नास्ति। अत्रोच्यते प्रकृतिरेवात्मानं बध्नाति मोचयति च यत्र सूक्ष्मशरीरं तन्मात्रकं त्रिविधकरणोपेतं तत् त्रिविधेन बन्धेन बध्यते। उक्तञ्च। प्राकृतेन च बन्धेन तथा वैकारिकेण च। दाक्षिणेन तृतीयेन बद्धो नान्येन मुच्यते। तत् सूक्ष्मं शरीरं धर्माधर्मसंयुक्तम्। प्रकृतिश्च बध्यते प्रकृतिश्च मुच्यते संसरतीति कथं तदुच्यते॥ ६२॥

रूपैः सप्तभिरेवैतानि सप्त प्रोच्यन्ते धर्मो वैराग्यमैश्वर्यमधर्मोऽज्ञानमवैराग्यमनैश्वर्य्यमेतानि प्रकृतेः सप्त रूपाणि तैरात्मानं स्वं बध्नाति प्रकृतिरात्मानं स्वमेव सैव प्रकृतिः पुरुषस्यार्थं पुरुषार्थं कर्त्तव्य इति विमोचयत्यात्मानमेकरूपेण ज्ञानेन। कथं तज्ज्ञानमुत्पद्यते॥ ६३॥

एवमुक्तेन क्रमेण पञ्चविंशतितत्त्व[illegible]तत्त्वाभ्यासादियं प्रकृतिरयं पुरुषः [illegible] [illegible]भूतानीति पुरुषस्य ज्ञानमुत्पद्यते नास्मि [illegible] न मे मम

सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवद् धृतशरीरः ॥६७॥
प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ।

---

उभयत्रापि चरितार्थत्वात् सर्गस्य नास्ति प्रयोजनं य. पुन. सर्ग इति। यथा दानग्रहणनिमित्त उत्तमर्णाधमर्णयोर्द्रव्यविशुद्धौ सत्यपि संयोगे न कश्चिदर्थसम्बन्धो भवति। एव प्रकृतिपुरुषयोरपि नास्ति प्रयोजनमिति। यदि पुरुषस्योत्पन्ने ज्ञाने मोक्षो भवति ततो मम कस्मान्न भवतीति। अत उच्यते ॥ ६६ ॥

यद्यपि पञ्चविंशतितत्त्वज्ञान सम्यक्ज्ञान भवति तथापि संस्कारवशाद्धृतशरीरो योगी तिष्ठति कथ चक्रभ्रमवच्चक्रभ्रमेण तुल्य यथा कुलालचक्र भ्रमयित्वा घट करोति मृत्पिण्ड चक्रमारोप्य पुनः कृत्वा घट पर्य्यासुञ्चति चक्र भ्रमत्येव संस्कारवशादेव सम्यग्ज्ञानाधिगमादुत्पन्नसम्यग्ज्ञानस्य धर्मादीनामकारणप्राप्तौ एतानि सप्तरूपाणि बन्धनभूतानि सम्यग्ज्ञानेन दग्धानि यथा नाग्निना दग्धानि बीजानि प्ररोहणसमर्थान्येवमेतानि धर्मादीनि बन्धनानि न समर्थानि। धर्मादीनामकारणप्राप्तौ संस्कावशाद्धृतशरीरस्तिष्ठति ज्ञानाद्वर्तमानधर्माधर्मक्षय. कस्मान्न भवति वर्तमानत्वादेव क्षणान्तरे क्षयमप्येति ज्ञान त्वनागतकर्म दहति वर्तमानशरीरेण च यत् करोति तदपीति विहितानुष्ठानकरणादिति संस्कारक्षयाच्छरीरपाते मोक्षः। स किंविशिष्टो भवतीत्युच्यते ॥ ६७ ॥

धर्माधर्मजनितसंस्कारक्षयात् प्राप्ते शरीरभेदे चरितार्थ-

ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥६८॥
पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥६९॥
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्
॥ ७० ॥
शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥७१॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥७२

त्वात् प्रधानस्य निवृत्तौ ऐकान्तिकमवश्यमात्यन्तिकमनन्त मिति कैवल्यं केवलभावो मोक्ष उभयमैकान्तिकात्यन्तिक मित्येवंविशिष्टं कैवल्यमाप्नोति ॥ ६८ ॥

पुरुषार्थो मोक्षस्तदर्थं ज्ञानमिदं गुह्यं रहस्यं परमर्षिणा कपिलर्षिणा समाख्यातं सम्यगुक्तं यत्र ज्ञाने भूतानां वैकारिकाणां स्थित्युत्पत्तिप्रलया अवस्थानाविर्भावतिरोभावा श्चिन्त्यन्ते विचार्यन्ते येषां विचारात् सम्यक् पञ्चविंशति तत्त्वविभागात्मिका सम्पद्यते संवित्तिरिति

एतच्च कपिलमुनिना प्रोक्तं संसारविमुक्तिकारणं हि ।
यत्रैताः सप्ततिरार्या भाष्यं चात्र गौडपादकृतम् ॥ ६९ ॥

———

# गोपथब्राह्मणम् ।



## प्रथमः प्रपाठकः ।

ओं ब्रह्म ह वा इदमग्र आसीत्, स्वयन्त्वेकमेव तदैक्षत, महद्वै यक्ष, तदेकमेवास्मि, हन्ताहं मदेव मन्मात्रं द्वितीय देवं निर्मम इति, तदभ्यश्राम्यदभ्यतपत् समतपत्, तस्य श्रान्तस्य तप्तस्य सन्तप्तस्य ललाटे स्नेहो यदार्द्र्यमाजायत तेनानन्दत्तमब्रवीत् महद्वै यक्ष सुवेदमविदामह इति। तद्यदब्रवीत् महद्वै यक्ष सुवेदमविदामह इति, तस्मात् सुवेदोऽभवत्तं वा एतं सुवेद सन्त स्वेद इत्याचक्षते। परोक्षेण परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः ॥ १ ॥

स भूयोऽश्राम्यद् भूयोऽतप्यत् भूय आत्मान समतपत्तस्य श्रान्तस्य तप्तस्य सन्तप्तस्य सर्वेभ्यो रोमगर्त्तेभ्यः पृथक् स्वेदधाराः प्रास्यन्दन्त। ताभिरनन्दत्, तदब्रवीदाभिर्वा अहमिदं सर्वं धारयिष्यामि यदिद किञ्चाभिर्वा अहमिदं सर्वं जनयिष्यामि यदिदं किञ्चाभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किञ्चेति। तद्यदब्रवीदाभिर्वा अहमिदं सर्वं धारयिष्यामि यदिदं किञ्चेति, तस्मात् धारा अभवस्तद्धाराणां धारात्वं यच्चासु ध्रियते। तद्यदब्रवीदाभिर्वा अहमिदं सर्वं जनयिष्यामि यदिदं किञ्चेति, तस्माज्जाया अभवस्तज्जायानां जायात्वं यच्चासु पुरुषो जायते, यच्च पुत्रः पुन्नामनरकमनेकशततारं तस्मात् त्राति पुत्रस्तत्

ध्रुवस्य ध्रुवत्वम्। तदप्यत्रोदाभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किंचेति तस्मादापोऽभवंस्तदपामप्त्वमाप्नोति वै स सर्वान् कामान् यान् कामयते ॥ २ ॥

ता अपः सृष्ट्वाऽन्वैक्षत तासु स्वां छायामपश्यत् तामस्येक्षमाणस्य स्वयं रेतोऽस्कन्दत्तदप्सु प्रत्यतिष्ठत् तास्तत्रैवाभ्यश्राम्यदभ्यतपत् समतपत्, ताः श्रान्तास्तप्ताः सन्तप्ताः सार्धमेव रेतसा द्वैधमभवंस्तासामन्या अन्यतरा अतिलवणा अपेया अस्वाद्वस्ता अशान्ता रेतः समुद्रं वृत्वाऽतिष्ठन्नथेतराः पेयाः स्वाद्व्यः शान्तास्ताश्चैवाभ्यश्राम्यदभ्यतपत् समतपत् ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः सन्तप्ताभ्यो यद्रेत आसीत्तदभृज्यत, यद् भृज्यत तस्माद् भृगुः समभवत् तद् भृगोर्भृगुत्वं भृगुरिव वै स सर्वेषु लोकेषु भाति य एवं वेद ॥ ३ ॥

स भृगु सृष्टोऽन्तरधीयत स भृगु सृष्ट प्राङैक्षत वागभ्यवदद्वायो वायो इति, स न्यवर्तत स दक्षिणां दिशमैक्षत वागभ्यवदत् मातरिश्वन् मातरिश्वन्निति स न्यवर्तत स प्रतीचीं दिशमैक्षत तं वागभ्यवदत् पवमान पवमान इति स न्यवर्तत स उदीचीं दिशमैक्षत तं वागभ्यवदद्वात वातेति तमब्रवीदन्व विदामव इति। (अथर्वाङेनमेतास्वेवाप्स्वन्विच्छेति तदथर्वीदथर्वाङेनमेतास्वेवाप्स्वन्विच्छति तदथर्वाऽभवत् तदथर्वणोऽथर्वणोऽथर्वत्वम्।) तस्य ह वा एतस्य भगवतोऽथर्वण ऋषेर्यथैव ब्रह्मणो लोमानि यथाऽङ्गानि यथा प्राण एवमेवास्य सर्व आत्मा समभवत्तमथर्वाणं ब्रह्माऽब्रवीत् प्रजापते प्रजाः सृष्टा पालयस्वेति। तदब्रवीत् प्रजापते प्रजाः सृष्टा पालयस्वेति तस्मात् प्रजापतिरभवत् तत् प्रजापतेः प्रजापतित्वमथर्वा वै प्रजापतिः प्रजापतिरिव वै स सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

तमथर्वाणमृषिमभ्यश्राम्यदभ्यतपत्, समतपत्तस्माच्छ्रान्तात्तप्तात् सन्तप्तात् दशतयानथर्वण ऋषीन्निरमिमतैकर्चान् द्व्यृचांस्तृचांश्चतुर्ऋचान् पञ्चर्चान् षडर्चान् सप्तर्चानष्टर्चान्नवर्चान्दशर्चानिति। तानथर्वण ऋषीनभ्यश्राम्यदभ्यतपत्समतपत्, तेभ्य श्रान्तेभ्यस्तप्तेभ्य. सन्तप्तेभ्यो दशतयानार्थवणानार्षेयान्निरमिमतैकादशान् द्वादशांस्त्रयोदशांश्चतुर्दशान् पञ्चदशान् षोडशान् सप्तदशानष्टादशान्नवदशान् विंशानिति। तानथर्वण ऋषीनाथर्वणांश्चार्षेयानभ्यश्राम्यदभ्यतपत् समतपत् तेभ्य' श्रान्तेभ्यस्तप्तेभ्य' सन्तप्तेभ्यो यान् मन्त्रानपश्यत् स आथर्वणो वेदोऽभवत् तमाथर्वण वेदमभ्यश्राम्यदभ्यतपत्समतपत्तस्माच्छ्रान्तात् तप्तात् सन्तप्तादोमिति मन एवोर्ध्वमक्षरमुदक्रामत्, स य इच्छेत्सर्वैरेतैरथर्वभिश्चाथर्वणैश्च कुर्वीयेत्येतयैव त महाव्याहृत्या कुर्वीत। सर्वैर्ह वा अस्यैतैरथर्वभिश्चाथर्वणैश्च कृत भवति य एव वेद यश्चैव विद्वानेवमेतया महाव्याहृत्या कुरुते ॥ ५ ॥

स भूयोऽश्राम्यद् भूयोऽतप्यद् भूय आत्मान समतपत् स आत्मनएव त्रींलोकान्निरमिमत पृथिवीमन्तरिक्षन्दिवमिति। स खलु पादाभ्यामेव पृथिवीं निरमिमतोदरादन्तरिक्षम्, मूर्ध्नो दिवम्। स तांस्त्रींलोकानभ्यश्राम्यदभ्यतपत्समतपत्तेभ्य' श्रान्तेभ्यस्तप्तेभ्य. सन्तप्तेभ्यस्त्रीन् देवान् निरमिमताग्निं वायुमादित्यमिति। स खलु पृथिव्या एवाग्निं निरमिमतान्तरिक्षाद्वायुन्दिव आदित्यम्। स तांस्त्रीन् देवानभ्यश्राम्यदभ्यतपत् समतपत्तेभ्य' श्रान्तेभ्यस्तप्तेभ्य' सन्तप्तेभ्यस्त्रीन् वेदान्निरमिमत ऋग्वेद यजुर्वेद सामवेदमिति, अग्ने ऋग्वेद, वायोर्यजुर्वेदमादित्यात्सामवेदम्। स तांस्त्रीन् वेदानभ्यश्राम्यदभ्यतपत् समतपत् तेभ्य' श्रान्तेभ्यस्तप्तेभ्य सन्तप्तेभ्य स्तिस्रो महाव्याहृ-

रसैश्च कुर्वीयेत्येतयैव तं महाव्याहृत्या कुर्वीत सर्वैर्ह वा अस्यै-तैरङ्गिरोभिश्चाङ्गिरसैश्च कृतं भवति य एवं वेद यश्चैवं विद्वानेवमेतया महाव्याहृत्या कुरुते ॥ ८ ॥

स ऊर्ध्वोऽतिष्ठत् स इमाँल्लोकान् व्यष्टभ्नात्, तस्मादङ्गिरसोऽधीयान ऊर्ध्वस्तिष्ठति, तद् व्रतं स मनसा ध्यायेद्यद् वा अहं किञ्च मनसा ध्यास्यामि तथैव तद् भविष्यति तद्ध स्म तथैव भवति।

तदप्येतदृचोक्तम्। श्रेष्ठो ह वेदस्तपसोऽधिजातो ब्रह्मज्यानां क्षितये सम्बभूव ऋत्यद् भूतं यदस्त्यतेदं निवेशनमनृणं दूरमस्येति। ता वा एता अङ्गिरसां यामयो यस्मैनयः करोति मेनिभिर्वीर्य्यैं य एवं वेद ॥ ९ ॥

स दिशोऽन्वैक्षत प्राचीं दक्षिणां प्रतीचीमुदीचीं ध्रुवामूर्ध्वामिति। तास्तत्रैवाभ्यश्राम्यदभ्यतपत्समतपत्ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः सन्तप्ताभ्यः पञ्च वेदान्निरमिमत सर्पवेदं पिशाचवेदमसुरवेदमितिहासवेदं पुराणवेदमिति। स खलु प्राच्या एव दिशः सर्पवेदं निरमिमत, दक्षिणस्याः पिशाचवेदं, प्रतीच्या असुरवेदमुदीच्या इतिहासवेदं ध्रुवायाश्चोर्ध्वायाश्च पुराणवेदम्। स तान् पञ्च वेदानभ्यश्राम्यदभ्यतपत्समतपत्तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः सन्तप्तेभ्यः पञ्च महाव्याहृतीर्निरमिमत वृधत् करद् गुहन् महत् तदिति। वृधदिति सर्पवेदात्, करदिति पिशाचवेदात्, गुहदित्यसुरवेदात्, महदितीतिहासवेदात्, तदिति पुराणवेदात्, स य इच्छेत्सर्वैरेतैः पञ्चभिर्वेदैः कुर्वीयेत्येताभिरेव तं महाव्याहृतिभिः कुर्वीत सर्वैर्ह वा अस्यैतैः पञ्चभिर्वेदैः कृतं भवति य एवं वेद यश्चैवं विद्वानेवमेताभिर्महाव्याहृतिभिः कुरुते १०

स आवतश्च परावतश्चान्वैक्षत, तास्तत्रैवाभ्यश्राम्यदभ्यतपत्समतपत्ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः सन्तप्ताभ्यः ओमित्यूर्ध्वमक्षर-

त ह स्मैतमेव विद्वांसं ब्रह्माणं यज्ञविरिष्टी वा यज्ञविरिष्टिनो वेत्युपाधावेरन् नमस्ते अस्तु भगवन् यज्ञस्य नो विरिष्टं सन्धेहीति, तद्यत्रैव विरिष्टं स्यात्तत्राग्नीनुपसमाधाय शान्त्युदकं कृत्वा पृथिव्यै श्रोत्रायेति त्रिरेवाग्नीन् सम्प्रोक्षति, त्रिः पर्युक्षति, त्रिः कारयमाणमाचामयति च, सम्प्रोक्षति च, यज्ञवास्तु च सम्प्रोक्षत्यथापि वेदानां रसेन यज्ञस्य विरिष्टं सन्धीयते, तद्यथा लवणेन सुवर्णं सन्दध्यात्सुवर्णेन रजतं रजतेन लोहं, लोहेन सीसं, सीसेन एवेवमेवास्य यज्ञस्य विरिष्टं सन्धीयते, यज्ञस्य सन्धितिमनुयजमानः सन्धीयते, यजमानस्य सन्धितिमन्वृत्विजः सन्धीयन्त, ऋत्विजां सन्धितिमनुदक्षिणाः सन्धीयन्ते दक्षिणानां सन्धितिमनुयजमानः पुत्रपशुभिः सन्धीयते, पुत्रपशूनां सन्धितिमनुयजमानः स्वर्गेण लोकेन सन्धीयते, स्वर्गस्य लोकस्य सन्धितिमनु तस्यार्द्धस्य योगक्षेमं सन्धीयते, यस्मिन्नर्द्धे यजन्त इति ब्राह्मणम् ॥ १४ ॥

तदुह स्माहाथर्वा दैवो विजानन्यज्ञविरिष्टानन्दानीत्युपशमयेरन् यज्ञे प्रायश्चित्तिं क्रियतेऽपि च यदु बह्विव यज्ञे विलोमं क्रियते नचैवास्य काचनार्त्तिर्भवति न च यज्ञविष्कन्धमुपयात्यपहन्ति पुनर्मृत्युमपात्येति पुनराजातिं कामचारोऽस्य सर्वेषु लोकेषु भाति य एवं वेद यश्चैवं विद्वान् ब्रह्मा भवति यस्य चैवं विद्वान् ब्रह्मा दक्षिणतः सदोऽध्यास्ते यस्य चैवं विद्वान् ब्रह्मा दक्षिणत उदङ्मुख आसीनो यज्ञ आज्याहुतीर्जुहोतीति ब्राह्मणम् ॥ १५ ॥

ब्रह्म ह वै ब्रह्माणं पुष्करे ससृजे, स खलु ब्रह्मा सृष्टश्चिन्तामापेदे केनाहमेकेनाक्षरेण सर्वांश्च कामान् सर्वांश्च लोकान् सर्वांश्च देवान् सर्वांश्च वेदान् सर्वांश्च यज्ञान् सर्वांश्च शब्दान् सर्वांश्च व्युष्टीः सर्वाणि च भूतानि स्थावरजङ्गमान्यनुभवेयमिति

स ब्रह्मचर्यमचरत् स ओमित्येतदक्षरमपश्यद् द्विवर्णं चतुर्मात्रं सर्वव्यापि सर्वविभ्वयातयामब्रह्म ब्राह्मीं व्याहृतिं ब्रह्मदैवतं तया सर्वांश्च कामान् सर्वांश्च लोकान् सर्वांश्च देवान् सर्वांश्च वेदान् सर्वांश्च यज्ञान् सर्वांश्च शब्दान् सर्वाश्च व्युष्टीः सर्वाणि च भूतानि स्थावरजङ्गमान्यभवत्तस्य प्रथमेन वर्णेनापः स्नेहं चान्वभवत्तस्य द्वितीयेन वर्णेन तेजो ज्योतींष्यन्वभवत् ॥ १६ ॥

तस्य प्रथमया स्वरमात्रया पृथिवीमग्निमोषधिवनस्पतीन् ऋग्वेदं भूरिति व्याहृतिं गायत्रं छन्दस्त्रिवृतं स्तोमं प्राचीं दिशं वसन्तमृतुं वाचमध्यात्मं जिह्वां रसमितीन्द्रियाण्यन्वभवत् ॥ १७ ॥

तस्य द्वितीयया स्वरमात्रयाऽन्तरिक्षं वायुं यजुर्वेदं भुव इति व्याहृतिं त्रैष्टुभं छन्दः पञ्चदशं स्तोमं प्रतीचीं दिशं ग्रीष्ममृतुं प्राणमध्यात्मं नासिके गन्धघ्राणमितीन्द्रियाण्यन्वभवत् ॥ १८ ॥

तस्य तृतीयया स्वरमात्रया दिवमादित्यं सामवेदं स्वरिति व्याहृतिं जागतं छन्दः सप्तदशं स्तोममुदीचीं दिशं वर्षा ऋतुं ज्योतिरध्यात्मं चक्षुषी दर्शनमितीन्द्रियाण्यन्वभवत् ॥ १९ ॥

तस्य वकारमात्रयाऽपश्चन्द्रमसमथर्ववेदं नक्षत्राण्योमिति स्वमात्मानं जनदित्याङ्गिरसामानुष्टुभं छन्द एकविंशं स्तोमं दक्षिणां दिशं शरदमृतुं मनोऽध्यात्मं ज्ञानं ज्ञेयमितीन्द्रियाण्यन्वभवत् ॥ २ ॥

तस्य मकारश्रुत्येतिहासपुराणं वाकोवाक्यगाथानाराशंसी रुपनिषदोऽनुशासनानीति वृधत् करद् गुहन् महत्तच्छमो-मिति व्याहृतीः स्वरशम्यनानातन्त्रीः स्वरनृत्यगीतवादित्राण्यन्वभवच्चैत्ररथं दैवतं वैद्युतं ज्योतिर्बार्हतं छन्दस्त्रिणवत्रयस्त्रिंशौ स्तोमौ ध्रुवामूर्ध्वां दिशं हेमन्तशिशिरावृतू श्रोत्रमध्यात्मं शब्दश्रवणमितीन्द्रियाण्यन्वभवत् ॥ २१ ॥

सैषैकाक्षरर्क्चग् ब्रह्मणस्तपसोऽग्रे प्रादुर्बभूव ब्रह्म वेदस्याथर्वण शुक्रमत एव मन्त्राः प्रादुर्बभूवुः स तु खलु मन्त्राणामतपसाशुश्रूषाऽनध्यायाध्ययनेन यदूनञ्च विरिष्टञ्च यातयामञ्च करोति तदथर्वणा तेजसा प्रत्याप्याययेन् मन्त्राश्च मामभिमुखीभवेयुर्गर्भा इव मातरमभिजिघांसु' पुरस्तादोङ्कार प्रयुङ्क्त एतयैव तदृचा प्रत्याप्याययेदेषैव यज्ञस्य पुरस्ताद्युज्यत एषा पश्चात् सर्वत एतया यज्ञस्तायते ।

तदप्येतदृचोक्तम् । या पुरस्ताद्युज्यत ऋचोऽक्षरे परमे व्योमन्निति ।

तदेतदक्षर ब्राह्मणो यं काममिच्छेत् त्रिरात्रोपोषित' प्राङ्मुखो वाग्यतो बर्हिष्युपविश्य सहस्रकृत्वा आवर्त्तयेत् सिद्धन्त्यस्यार्थाः सर्वकर्माणि चेति ब्राह्मणम् ॥ २२ ॥

• वसोर्धाराणामैन्द्रनगरन्तदसुराः पर्य्यवारयन्त, ते देवा भीता आसन् क इमानसुरानपहनिष्यतीति, त ओङ्कारं ब्रह्मण' पुत्र' ज्येष्ठ' ददृशुस्ते तमब्रुवन् भवता मुखेनेमानसुरान् जयेमेति । स होवाच किं मे प्रतीवाहो भविष्यतीति वर वृणीष्वेति वृणा इति स वरमवृणीत न मामनीरयित्वा ब्राह्मणाः ब्रह्म वदेयुर्यदि वदेयुरब्रह्म तत् स्यादिति तथेति ते देवा देवयजनस्योत्तरार्द्धेऽसुरै सयत्ता आसस्तानोङ्कारेणाग्नीध्रीयाद्देवा असुरान् पराभावयन्त, तद्यत्पराभावयन्त तस्मादोङ्कार पूर्व उच्यते । यो ह वा एतमोङ्कार' न वेदावश' स्यादित्यथ य एव वेद ब्रह्म वश स्यादिति तस्मादोङ्कार ऋच्यृग् भवति यजुषि यजु सास्नि साम सूत्रे सूत्र ब्राह्मणे ब्राह्मणं श्लोके श्लोक' प्रणवे प्रणव इति ब्राह्मणम् ॥ २३ ॥

ओङ्कार पृच्छाम' को धातु किं प्रातिपदिकं किं नामाख्यातं किं लिङ्गं किं वचनं का विभक्तिः कः प्रत्ययः क स्वरः

न्यन्नेदीयस्तस्मादापेरोङ्कारः सर्वमाप्नोतीत्यर्थः कृदन्तमर्थवत् प्रातिपदिकमदर्शनं प्रत्ययस्य नाम सम्पद्यते निपातेषु चैनं वैयाकरणा उदात्तं समामनन्ति तदव्ययीभूतमन्वर्थवाची शब्दो न व्येति कदाचनेति।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥ को विकारी च्यवते प्रसारणमाप्नोति रावावपकारी विकार्य्यावादित ओङ्कारो विक्रियते द्वितीयो मकार एव द्विवर्ण एकाक्षर ओमित्योङ्कारो निर्वृत्त ॥ २६ ॥

कतिमात्र इत्यादेस्तिस्रो मात्रा अभ्यादाने हि प्लवते मकारश्चतुर्थी किं स्थानमित्युभावोष्ठौ स्थानं नादानुप्रदानकरणौ च द्वयस्थानं सन्ध्यक्षरमवर्णलेशः कण्ठ्यो यथोक्तशेषः पूर्वो विवृतकरणस्थितश्च द्वितीयस्पृष्टकरणस्थितश्च न संयोगो विद्यत आख्यातोपसर्गानुदात्तस्वरितलिङ्गविभक्तिवचनानि च संस्थानाध्यायिन आचार्य्याः पूर्वे बभूवुः श्रवणादेव प्रतिपद्यन्ते नकारण पृच्छन्त्यथापरपक्षीयाणां कविः पञ्चालचण्डः परिपृच्छको बभूवा वु पृथगुद्गीथदोषान् भवन्तो ब्रुवन्त्विति तद्वाप्युपलक्षये द्वर्णाक्षरपदाङ्कशो विभक्त्यामृषिनिषेवितामिति वाच स्तुवन्ति तस्मात् कारणं ब्रूमो वर्णानामयमिदं भविष्यतीति षडङ्गविदस्तत्तथाऽधीमहे। किञ्छन्द इति गायत्रं हि छन्दो गायत्री वै देवानामेकाक्षरा श्वेतवर्णा च व्याख्याता द्वौ द्वादशको वर्गावेतद् वै व्याकरणं धात्वर्थवचनं शैक्ष्यं छन्दोवचनं चाथोत्तरौ द्वौ द्वादशकौ वर्गौ वेदरहस्यकौ व्याख्याता मन्त्रः कल्पो ब्राह्मणमृग्यजुः सामाथर्वण्येषा व्याहृतिश्चतुर्णां वेदानामानुपूर्वेणोंभूर्भुवस्वरिति व्याहृतय ॥ २७ ॥

असमीक्ष्यप्रवर्द्धितानि श्रूयन्ते द्वापरादावृषीणामेकदेशो दोषपतिरिह चिन्तामापेदे त्रिभिः सोमः पातव्यः समाप्तमिव

भवति तस्मादप्यद्य सामान्यपक्षान्तविज्ञोपासंस्तत्र भवर्वेय परिदेवयाञ्चक्रिरे सर्वस्योपशमं प्राप्ताश्चो न चैतत् सर्वे सम भिविर्तं ति वयं भगवन्तमिषोपधावाम सर्वेषामेव शर्म भवानीति ते तथेत्युक्त्वा तूष्णीमतिष्ठन्नुपसन्नेभ्य इत्युपोपसीदामीति गोपेर्यमूचु । स एष उपनीय प्रोवाच मामिकामिव व्याहृति मादित आदित ऋचुम्भिमन्त्रे मामन्त्रा आधीयन्ते ।

गतं ह्यग्निरोविहर सोम पातस्य ऋत्विज पराभवन्ति यजमानो रजसापध्वस्यति श्रुतिश्चापध्वस्ता तिष्ठतीत्येवमेवोत्त- रोत्तराणि माठेयं लोकमयाचमिवेयं प्रतापो न पराभविष्य तीति तस्मात् तस्मात् भगवन्यिति प्रतिपेदिर आम्नायचक्षे तथा चैतयोपमया यम्भु । तस्माद् ब्रह्मवादिन ओङ्कारमादित कुर्वन्ति ॥ २८ ॥

किं देवतमिति ऋचामग्निर्देवतन्तदेव ज्योतिर्गायत्रं छन्दः पृथिवी स्थानम् । अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातममित्येवमादिं कृत्वा ऋग्वेदमधीयते ।

यजुषां वायुर्देवतं तदेव ज्योतिस्त्रैष्टुभं छन्दोऽन्तरिक्षं स्थानम् । इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु । श्रेष्ठतमाय कर्मण इत्येवमादिं कृत्वा यजुर्वेदमधीयते ।

साम्नामादित्यो देवतं तदेव ज्योतिर्जागतं छन्दो द्यौः स्थानम् । अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषीत्येवमादिं कृत्वा सामवेदमधीयते ।

अथर्वणां चन्द्रमा देवतं तदेव ज्योतिः सर्वाणि छन्दांस्यापः स्थानम् । शन्नो देवीरभिष्टय इत्येवमादिं कृत्वा अथर्ववेदमधीयते । अद्भ्यः स्थावरजङ्गमो भूतग्रामः सम्भवति, तस्मात् सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयम् ।

अन्तरैते त्रयो वेदा भृगूनङ्गिरसः श्रिता इत्यब्रिति प्रकृतिरपा-
मोङ्कारेण चैतस्माद् व्यासः पुरोवाच भृग्वङ्गिरोविदा संस्कृतो-
ऽन्यान् वेदानधीयीत नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत अथ
सामवेदे खिलश्रुतिः ब्रह्मचर्य्येण चैतस्मादथर्वाङ्गिरसो ह यो
वेदः स वेद सर्वमिति ब्राह्मणम् ॥ २९ ॥

अध्यात्ममात्मभैषज्यमात्मकैवल्यमोङ्कार आत्मानं निरुध्य
सङ्गमात्रीं भूतार्थचिन्तां चिन्तयेदतिक्रम्य वेदेभ्यः सर्वपरमा-
ध्यात्मफलं प्राप्नोतीत्यर्थं सवितर्कं ज्ञानमयमित्येते प्रश्नैः प्रति-
वचनैश्च यथार्थं पदमनुविचिन्त्य प्रकरणज्ञो हि प्रबलो विषयी
स्यात् सर्वस्मिन्वाको वाक्य इति ब्राह्मणम् ॥ ३० ॥

एतद्ध स्मैतद्विद्वासमेकादशाक्षमौद्गल्यं ग्लावो मैत्रेयोऽभ्या-
जगाम स तस्मिन् ब्रह्मचर्य्ये वसतीति विज्ञायोवाच किं स्विन्
मर्य्यादा अयं तं मौद्गल्योऽध्येति यदस्मिन् ब्रह्मचर्य्ये वसतीति तद्धि
मौद्गल्यस्यान्तेवासी शुश्राव स आचार्य्यायाव्रज्याचचष्टे दुरधी-
यानं वा अयं भवन्तमवोचद्योऽयमद्यातिथिर्भवति किं सौम्य
विद्वानिति । त्रीन् वेदान् ब्रूते भो३ इति तस्य सौम्य यो
विस्पष्टो विजिगीषोऽन्तेवासी तन्मे ह्वयेति, तमाजुहाव तमभ्यु-
वाचासाविति भो३ इति किं सौम्य तं आचार्य्योऽध्येतीति,
त्रीन् वेदान् ब्रूते भो३ इति, यन्नु खलु सौम्यास्माभिः सर्वे वेदा
मुखतो गृहीताः कथन्त एवमाचार्य्यो भाषते कथं नु शिष्टाः
शिष्टेभ्य एवं भाषेरन् यं ह्येनमहं प्रश्नं प्रक्ष्यामि न तं विव-
क्ष्यति न ह्येनमध्येतीति । स ह मौद्गल्यः स्वमन्तेवासिनमुवाच,
परेहि सौम्य ग्लावं मैत्रेयमुपसीदाधीहि भोः सावित्रीं गाय-
त्रीं चतुर्विंशतियोनिं द्वादशमिथुनां यस्या भृग्वङ्गिरसश्चक्षुर्यस्यां
सर्वमिदं श्रितं, तां भवान् प्रब्रवीत्विति स चेत्सौम्य दुरधीयानो
भविष्यत्याचार्य्योवाच ब्रह्मचारी ब्रह्मचारिणे सावित्रीं प्राहेति

वै पृथिवी तदग्निरित्येते द्वे योनी एकं मिथुनं, वायुरेव सविता-
ऽन्तरिक्षं सावित्री यत्र ह्येव वायुस्तदन्तरिक्षं, यत्र वा अन्तरिक्षं
तद्वायुरित्येते द्वे योनी एकं मिथुनम्, आदित्य एव सविता द्यौः
सावित्री यत्र ह्येवादित्यस्तद्द्यौर्यत्र वै द्यौस्तदादित्य इत्येते द्वे योनी
एकं मिथुनं, चन्द्रमा एव सविता, नक्षत्राणि सावित्री, यत्र ह्येव
चन्द्रमास्तन्नक्षत्राणि यत्र वै नक्षत्राणि तच्चन्द्रमा, इत्येते द्वे योनी
एकं मिथुनम्, अहरेव सविता, रात्रिः सावित्री, यत्र ह्येवा-
हस्तद्रात्रिर्यत्र वै रात्रिस्तदहरित्येते द्वे योनी एकं मिथुनम्,
उष्णमेव सविता, शीतं सावित्री, यत्र ह्येवोष्णं, तच्छीतं,
यत्र वै शीतं तदुष्णमित्येते द्वे योनी एकं मिथुनम्, अभ्रमेव
सविता, वर्षं सावित्री, यत्र ह्येवाभ्रन्तद्वर्षं यत्र वै वर्षं तदभ्र-
मित्येते द्वे योनी एकं मिथुनं, विद्युदेव सविता स्तनयित्नुः
सावित्री यत्र ह्येव विद्युत् तत् स्तनयित्नुः यत्र वै स्तनयित्नु-
स्तद्विद्युदित्येते द्वे योनी एकं मिथुनं, प्राण एव सविता अन्नं
सावित्री, यत्र ह्येव प्राणस्तदन्नं यत्र वा अन्नं तत् प्राण इत्येते
द्वे योनी एकं मिथुनं, वेदा एव सविता छन्दांसि सावित्री,
यत्र ह्येव वेदास्तच्छन्दांसि यत्र वै छन्दांसि तद् वेदा इत्येते
द्वे योनी एकं मिथुनं, यज्ञ एव सविता, दक्षिणा सावित्री,
यत्र ह्येव यज्ञस्तत् दक्षिणा यत्र वै दक्षिणास्तद्यज्ञ इत्येते द्वे
योनी एकं मिथुनम्, एतद्ध स्मैतद्विद्वांसमोपाकारिमासस्तु-
र्ब्रह्मचारी ते संस्थित इत्यथैतं आससुराचित इव चितो
बभूवाथोत्थाय प्राव्राजीदित्येतद्वाऽहं वेद नैतासु योनिष्वित
एतेभ्यो वा मिथुनेभ्यः सम्भूतो ब्रह्मचारी मम पुरायुषः प्रेया-
दिति ॥ २३ ॥

ब्रह्म हेदं श्रियं प्रतिष्ठामायतनमैक्षत तत्तपस्व यदि तद्
व्रते ध्रियेत तत्सत्ये प्रत्यतिष्ठत् स सविता सावित्र्या ब्राह्मणं

ह्मा तत्सावित्रीं पर्यदधात् तत् सवितुर्वरेण्यमिति सावित्र्याः प्रथमः पादः, पृथिव्यर्चं समदधादृचाऽग्निमग्निना श्रियं, श्रिया स्त्रियं स्त्रिया मिथुनं मिथुनेन प्रजां प्रजया कर्म कर्मणा तपः, तपसा सत्यं, सत्येन ब्रह्म ब्रह्मणा ब्राह्मणं ब्राह्मणेन व्रतं व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद यश्चैवं विद्वानेवमेतां सावित्र्याः प्रथमं पादं व्याचष्टे ॥१४॥

भर्गो देवस्य धीमहीति सावित्र्या द्वितीयः पादोऽन्तरिक्षेण यजुः समदधात् यजुषा वायुं वायुनाऽभ्रम्, अभ्रेण वर्षं वर्षेणौषधिवनस्पतीनोषधिवनस्पतिभिः पशून् पशुभिः कर्म कर्मणा तपस्तपसा सत्यं सत्येन ब्रह्म, ब्रह्मणा ब्राह्मणं ब्राह्मणेन व्रतं व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद यश्चैवं विद्वानेवमेतां सावित्र्या द्वितीयं पादं व्याचष्टे ॥ १५ ॥

धियो यो नः प्रचोदयादिति सावित्र्यास्तृतीयः पादो दिवा साम समदधात् साम्नाऽऽदित्यमादित्येन रश्मीन् रश्मिभिर्वर्षं वर्षेणौषधिवनस्पतीनोषधिवनस्पतिभिः पशून् पशुभिः कर्म कर्मणा तपस्तपसा सत्यं सत्येन ब्रह्म, ब्रह्मणा ब्राह्मणं ब्राह्मणेन व्रतं व्रतेन वै ब्राह्मणः संशितो भवत्यशून्यो भवत्यविच्छिन्नो भवत्यविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद यश्चैवं विद्वानेवमेतां सावित्र्यास्तृतीयं पादं व्याचष्टे ॥ १६ ॥

तेन ह वा एवं विदुषा ब्राह्मणेन ब्रह्माभिपन्नं ग्रसितं परामृष्टं ब्रह्मणाऽऽकाशमभिपन्नं ग्रसितं परामृष्टमाकाशेन वायुरभिपन्नो ग्रसितः परामृष्टो वायुना ज्योतिरभिपन्नं

ग्रसित परामृष्ट, ज्योतिषाऽपोऽभिपन्ना ग्रसिताः परामृष्टा अद्भिर्भूमिरभिपन्ना ग्रसिता परामृष्टा, भूम्याऽन्नमभिपन्न ग्रसित परामृष्टमन्नेन प्राणोऽभिपन्नो ग्रसित, परामृष्ट' प्राणेन मनोऽभिपन्न ग्रसितं परामृष्ट, मनसा वागभिपन्ना ग्रसिता परामृष्टा, वाचा वेदा अभिपन्ना ग्रसिता परामृष्टा, वेदै-र्यज्ञोऽभिपन्नो ग्रसित' परामृष्टस्तानि ह वा एतानि द्वादश-महाभूतान्येवं विधिप्रतिष्ठितानि तेषा यज्ञ एव परार्द्धः ॥ ३७॥

त ह स्मैतमेव विद्वांसो मन्यन्ते विद्मैनमिति याथातथ्य-मविद्वांसोऽय यज्ञो वेदेषु प्रतिष्ठितो, वेदा वाचि प्रतिष्ठिता, वाङ् मनसि प्रतिष्ठिता, मन प्राणे प्रतिष्ठित प्राणोऽन्ने प्रति-ष्ठितोऽन्न भूमौ प्रतिष्ठित, भूमिरप्सु प्रतिष्ठिता, आपो ज्योतिषि प्रतिष्ठिता, ज्योतिर्वायौ प्रतिष्ठित, वायुराकाशे प्रति-ष्ठित, आकाश ब्रह्मणि प्रतिष्ठित, ब्रह्म ब्राह्मणे ब्रह्मविदि प्रतिष्ठित, यो ह वा एवं वित् स ब्रह्मवित्, पुण्या च कीर्त्तिं लभते सुरभींश्च गन्धान् सोऽपहतपाप्मानन्त्यश्रियमश्नुते य एव वेद यश्चैव विद्वानेवमेता वेदाना मातर सावित्रीसम्पदमु-पनिषदमुपास्त इति ब्राह्मणम् ॥ ३८ ॥

आपो गर्भं जनयन्तीरित्यपाङ्गर्भं' पुरुष स यज्ञोऽद्भिर्यज्ञ. प्रणीयमान प्राङ्णायते, तस्मादाचमनीयं पूर्वमाहारयति स यदाचामति त्रिराचामति द्वि परिमृज्यत्यायुरवरुद्ध्य पाप्मान निर्णुदत्युपसाद्य यजुषोद्धृत्य मन्त्रान् प्रयुज्यावसाय प्राची शाखा सन्धायो निरङ्कुष्ठे पाणावस्तृतमस्यस्तृतोपस्तरणमस्य-स्तृताय त्वोपस्तृणामीति पाणावुदकमानीय जीवास्थेति सूक्तेन त्रिराचामति। स यत्पूर्वमाचामति सप्त प्राणास्तानेतेनाग्नि-माप्याययति या इमा वाह्या शरीरान्मात्रास्तद्यथैतदग्नि वायुमादित्य चन्द्रमसमप. पशूनन्याश्च प्रजास्तानेतेनाग्निमा-

# अथ द्वितीयः प्रपाठकः।

भो ब्रह्मचारीष्यांश्चरति रोदसी उभे इत्याचार्यमाह।
तस्मिन् देवाः सम्मनसो भवन्तीति वायुमाह स मद्य एति
पूर्वस्मादुत्तरं समुद्रमित्यादित्यमाह दीक्षितो दीर्घश्मश्रुरेष
दीक्षित एव दीर्घश्मश्रुरेष एवाचार्य्यस्थाने तिष्ठन्नाचार्य्य इति
स्तूयते, वैद्युतस्थाने तिष्ठन् वायुरिति स्तूयते, द्यौस्थाने तिष्ठन्ना-
दित्य इति स्तूयते।

तदप्येतदृचोक्तं ब्रह्मचारीष्यन्निति ब्राह्मणम्॥ १॥

जायमानो ह वै ब्राह्मण सप्तेन्द्रियाण्यभिजायन्ते, ब्रह्म-
वर्चसञ्च यशश्च स्वप्नश्च क्रोधश्च श्लाघा च रूपञ्च पुण्यमेव गन्ध
सप्तमम्। तानि ह वा अस्यैतानि ब्रह्मचर्य्यमुपेतोपक्रामन्ति,
मृगानस्य ब्रह्मवर्चसं गच्छत्याचार्य्यं यशोऽजगरं स्वप्नो वराहं
क्रोधोऽपश्लाघा कुमारीं रूपमोषधिवनस्पतीन् पुण्यो गन्धः स
यन्मृगाजिनानि वस्ते तेन तद् ब्रह्मवर्चसमवरुन्धे, यदस्य मृगेषु
भवति सह स्नातो ब्रह्मवर्चसी भवति स यदहरहराचार्य्याय
कर्म करोति तेन तद्यशोऽवरुन्धे यदस्याचार्य्ये भवति सह स्नातो
यशस्वी भवति स यत्सुषुप्सुर्निद्रान्निनयति तेन तं स्वप्नमवरुन्धे
योऽस्याजगरे भवति तं ह स्नातं स्वपन्तमाहुः स्वपितु मैनं
बोबुधयेति स क्रुद्धो वाचा न कञ्चन हिनस्ति पुरुषात् पुरु-
षात् पापीयानिव मन्यमानस्तेन तं क्रोधमवरुन्धे, योऽस्य
वराहे भवति तस्य ह स्नातस्य क्रोधा श्लाघीयस विशन्तेऽथाङ्गि
श्लाघ्यमानो न श्लायात्तेन तं श्लाघामवरुन्धे, योऽस्याप्सु भवति
सह स्नातः श्लाघीयोऽन्येभ्यः श्लाघ्यतेऽथैतद्ब्रह्मचारिणो रूपं
यत्कुमार्य्यास्तान्नग्नान्नो दीक्षेदेति वेति मुखं विपरिधापयेत्तेन
तद्रूपमवरुन्धे, यदस्य कुमार्य्या भवति तं ह स्नातं कुमारीमिव

न्तोऽन्नमद्यादथाह 'अघनमाहुः', स्नापयेतेनमित्यास्मिन्नाराम ह्येतानि व्रतानि भवन्ति, तं चेच्छयानमाचार्य्योऽभिवदेत्, स प्रतिसङ्खाय प्रतिशृणुयात्तं चेच्छयानमुत्थाय तच्चेदुत्थितमभिप्रक्रम्य त चेदभिप्रक्रान्तमभिपलायमानमेव ह स्म वैतत् पूर्वं ब्राह्मणा ब्रह्मचर्य्यं चरन्ति, तेषा ह स्म वेषा पुण्या कीर्त्तिर्गच्छत्याह वा अथ सोऽद्य गमिष्यतीति ॥ ४ ॥

जनमेजयो ह वै पारीक्षितो मृगयाश्चरिष्यन् हंसाभ्यामग्निसन्नुपावतस्थ इति, तावूचतुर्जनमेजय पारीक्षितमभ्याजगाम, स होवाच नमो वां भगवन्तौ, कौ नु भगवन्ताविति, तावूचतुर्दक्षिणाग्निश्चाहवनीयश्चेति, स होवाच नमो वां भगवन्तौ, तदाकीयतामितिन्नोपाराममित्यपि किल देवा न रमन्ते न हि देवा न रमन्तेऽपि चैकोपारामाद्दे वा आराममुपसङ्क्रामन्तीति, स होवाच नमो वां भगवन्तौ, किं पुण्यमिति ब्रह्मचर्य्यमिति किं लौक्यमिति ब्रह्मचर्य्यमेवेति, तत् को वेद इति, दन्तावलो धौम्योऽथ खलु दन्तावलो धौम्यो यावति तावति काले पारीक्षितं जनमेजयमभ्याजगाम, तस्मा उत्थाय स्वयमेव विष्टरं निदधौ, तमुपसङ्गृह्य पप्रच्छाधीहि भो किं पुण्यमिति ब्रह्मचर्य्यमिति, किं लौक्यमिति ब्रह्मचर्य्यमेवेति, तस्मा एतत् प्रोवाचाष्टाचत्वारिंशद्वर्षं सर्ववेदब्रह्मचर्य्यं, तच्चतुर्द्धा वेदेषु व्यूह्य द्वादशवर्षं ब्रह्मचर्य्यं द्वादशवर्षाण्यवरार्द्धमपि स्नाय चरेद्यथाशक्त्यपरम्। तस्मा उहस्यूपभौ सहसन्दटावप्यपि कीर्त्तितमाचार्य्यो ब्रह्मचारीत्येक आहुराकाशमधिदैवतमथाध्यात्मं ब्राह्मणो व्रतवाचरणवान् ब्रह्मचारी ॥ ५ ॥

ब्रह्म ह वै प्रजा मृत्यवे सम्प्रयच्छत्, ब्रह्मचारिणमेव न सम्प्रददौ, स होवाचास्यामस्मिन्निति किमिति या रात्रीः समिधमनाहृत्य वसेत्तामायुषोऽवरुन्धीयेति, तस्माद् ब्रह्मचार्य्यहरहः

समिध आहृत्य सायं प्रातरग्निं परिचरेत्, गोपथमुपसादयेत् अथ प्रतिष्ठापयेत् यद्युपर्युपसादयेदधोमूलवर्ती तदस्य पाप्मनो भवति । दिवा चङ्क्रमन् ब्राह्मणो वा भवं ब्रह्मचर्यं चरिष्यति भूताये भिक्षा इति, प्रजापतिर्भूत ब्रह्मचारी प्रजापतया इति भिक्षेथा इष्टोत्सादादत्ता इति इष्टापूर्त सुकृतद्रविणमवरुन्ध्यादिति, तस्माद् ब्रह्मचारिणेऽहरहर्भिक्षां दद्यादप्यविषो मामिष्टापूर्तं सुकृतद्रविणमवरुन्ध्यादिति । सप्तमीं नातिनयेत्सप्तमी *मतिनयन्न ब्रह्मचारी भवति समिद्भैक्षे सप्तरात्रमचरितवान्* ब्रह्मचारी पुनरुपनेयो भवति ॥ ६ ॥

नोपरि शायी स्यान्न गायनो न नर्तनो न सरणो न निष्ठीवेद् यदुपरि शायी भवत्यभीक्ष्णं निवासा जायन्ते यद्गायनो भवत्यभीक्ष्णमाक्रन्दाधावन्ते यन्नर्तनो भवत्यभीक्ष्णं प्रेतान्निर्हरन्ते यत्सरणो भवत्यभीक्ष्णं प्रजाः संविशन्ते यन्निष्ठीवति मध्य एव तदात्मनो निष्ठीवति स चेन्निष्ठीवेद्दिवो नु मां यदत्रापि मधोरहं यदत्रापि रसस्य मे रसायानमनुमन्त्रयते। यदत्रापि मधोरहं निरिष्टविषमस्तम्। अग्निश्च तत्सविता च पुनर्मे जठरे धत्ताम्। यदत्रापि रसस्य मे परापपातास्म तम्। तदिदं तेनोपह्वयामहे तत्र आप्यायतां पुनरिति। न श्मशान मातिष्ठेत् स चेदभितिष्ठेदुदकं हस्ते कृत्वा यदीदमृतुकाम्येन भिमन्त्र्य अपत् अम्भाक्ष परिषिञ्चेत् समयायोपरि प्रवेत् यदीदमृतुकाम्याय पितृमुपेषिम अत्र सोमवत् दीयताम्। मा मोऽस्मामादध यत इति। अथ हैतद्वाचां परिपूतं यद् ब्रह्मचारी।

तदप्येतदृचोक्तम्। देवानामेतत्परिपूतमनभ्यारूढं चरति रोचमानं तस्मिन् सर्वे पशवस्तत्र यज्ञास्तस्मिन्नन्नं सह देवताभिरिति ब्राह्मणम् ॥ ७ ॥

प्राणापानौ जनयन्निति गङ्गस्य मूले महर्षेर्वसिष्ठस्य पुत्रः एता वाच ससृजे, शीतोष्णाविद्धौसौ प्रादुर्भवेयातामिति तथा तच्छश्वदनुवर्त्तते, अथ खलु विपाशमध्ये वशिष्ठशिला नाम प्रथम आश्रमो, द्वितीय कृष्णशिलास्तस्मिन् वशिष्ठ' समतपद्विश्वामित्रजमदग्नी जामदग्ने तपतः, गौतमभरद्वाजौ मिहौ प्रभवे तपत' गुङ्गुगुर्वासे तपत्यृषिरर्चिद्रोणेऽभ्यतपदगस्त्योऽगस्त्यतीर्थे तपति दिव्यचिर्हं तपति स्वयम्भू' कश्यप' कश्यपतुङ्गेऽभ्यतपदुलहूकचुंतरद्गु श्वा वराहचिल्वटिवभ्रुकाः सर्पदष्टन' संहनुक्षखाना कश्यपतुङ्गदर्शनात्सरगवाटात् सिद्धिर्भवति ब्राह्मग्र वर्षसहस्रमपिवने ब्रह्मचार्य्यकपादेनातिष्ठद् द्वितीय वर्षसहस्र' मूर्द्धन्येवामृतस्य धारामधारयद् ब्राह्माण्यष्टाचत्वारिशत वर्षसहस्राणि सलिलस्य पृष्ठे शिवोऽभ्यतपत्तस्मात्तस्मात्तपसो भूय एवाभ्यतपत्।

तदप्येता ऋचोऽभिवदन्ति प्राणापानौ जनयन्निति ब्राह्मणम् ॥ ८ ॥

एकपाद् द्विपद इति वायुरेकपात्तस्याकाश पादश्चन्द्रमा द्विपात्तस्य पूर्वपचापरपचौ पादावादित्यस्त्रिपात्तस्येमे लोका पादा अग्नि षट्पादस्तस्य पृथिव्यन्तरिक्ष द्यौराप ओषधिवनस्पतय इमानि भूतानि पादास्तेषा सर्वेषा वेदा गतिरात्मा, प्रतिष्ठितायतसो ब्रह्मण' शाखा, अथो आह षडिति मूर्त्तिराकाशश्चेत्यृचा मूर्त्तिर्याजुषी गति. साममयन्तेजो भृग्वङ्गिरसामापैतद् ब्रह्मैव यज्ञश्चतुष्पाद् हि सस्थित इति। तस्य भृग्वङ्गिरस सस्थे अथो आहुरेकसस्थित इति, यद्धोतर्चा मण्डलैः करोति पृथिवीं तेनाप्याययति एतस्या ह्यग्निश्चरति।

तदप्येतदृचोक्तम्। अग्निवासा पृथिव्यसि तन्यूरिति।

यदध्वर्य्युर्यजुषा करोत्यन्तरिक्ष तेनाप्याययति तस्मिन् वायुर्न निविशते कतमश्च नाह इति।

उदीच्येष्वन्नमदन्तीत्यथ वयं तवैवातिमाने नानाध्यास्मो वत्स वाहनमन्विच्छेति स मान्धातुर्यौवनाश्वस्य सार्वभौमस्य राज्ञः सोमं प्रसूतमाजगाम, स सदोऽनुप्रविश्यर्त्विजश्च यजमानञ्चा-मन्त्रयामास, तद्या प्राच्यो नद्यो वहन्ति याश्च दक्षिणाच्यो याश्च प्रतीच्यो याश्च उदीच्यस्ताः सर्वाः पृथङ्नामधेयैरित्याचक्षते, तासां समुद्रमभिपद्यमानानां छिद्यते नामधेयं समुद्र इत्याचक्षते, एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः स ब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्याताः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्यास्तेषां यज्ञमभिपद्यमानानां छिद्यते नामधेयं यज्ञ इत्येवाचक्षते ॥ १० ॥

भूमिर्ह वै एतद्विच्छिन्नं देवयजनं यदप्राक्प्रवणं यदनुदक्-प्रवणं यत् क्षत्रिमं यत्समविषममिदं ह त्वेव देवयजनं यत्सम समूलमविदग्धं प्रतिष्ठितं प्रागुदक्प्रवणं समं समास्तीर्णमिव भवति, यत्र ब्राह्मणस्य ब्राह्मणतां विद्याद् ब्रह्मा ब्रह्मत्वं करोतीति वोचे छन्दस्तन्न विन्दामो येनोत्तरमेमहीति। तान् ह पप्रच्छ किं विद्वान् होता हौत्रं करोति, किं विद्वानध्वर्युराध्वर्य्यव करोति, किं विद्वानुद्गातौद्गात्रं करोति, किं विद्वान् ब्रह्मा ब्रह्मत्वं करोतीति वोचे छन्दस्तन्न विन्दामो येनोत्तरमेमहीति। ते ब्रूमो वागेव होता हौत्रं करोति वाचो हि स्तोमाश्च वषट्काराश्चाभिसम्पद्यन्ते, ते ब्रूमो वागेव होता वाग् ब्रह्म वाक् देव इति। प्राणापानाभ्यामेवाध्वर्य्युराध्वर्य्यव करोति, प्राणैः प्रणीतानि ह भूतानि प्राणैः प्रणीताः प्रणीतास्ते ब्रूम प्राणापानावेवाध्वर्य्यू प्राणापानौ ब्रह्म प्राणापानौ देव इति। चक्षुषैवोद्गाता औद्गात्रं करोति चक्षुषा हीमानि भूतानि पश्य-न्त्यथो चक्षुरेवोद्गाता चक्षुर्ब्रह्म चक्षुर्देव इति। मनसैव ब्रह्मा

प्रतद्दहन्त्युद्दहन्ति तद्देवयजनं यत्सम समूलमविदग्ध प्रतिष्ठितं प्रागुदक्प्रवण समंसमास्तीर्णमिव भवति यस्य श्वभ्रकूर्मौ ह्रदः पर्वतो नदी पन्था वा पुरस्तात्स्यान्न देवयजनमात्रं पुरस्तात्पर्य्येषशिष्येन्नोत्तरतोऽग्ने. पर्य्युपसीदेरन्निति ब्राह्मणम् ॥ १४ ॥

अदितिर्वै प्रजाकामौदनमपचत् तत उच्छिष्टमश्नात् सा गर्भमधत्त, तत आदित्या अजायन्त, य एष ओदनः पच्यत आरम्भणमेवैतत् क्रियते आक्रमणमेव प्रादेशमात्रीः समिधो भवन्त्येतावा ह्यात्मा प्रजापतिना सम्मितोऽग्नेर्वै या यज्ञिया तनूरासत्ये तया समगच्छत एषा सष्टत्या तनूर्यद् घृत, यद् घृतेन समिधो अनक्ति ताभ्यामेवैन तन्तनूभ्यां समर्द्धयति यन्निर्मार्गस्यादधात्यवकूत्या वै वीर्य्यं क्रियते यन्निर्मार्गस्यादधात्यवकूत्या एव संवत्सरो वै प्रजननमग्नि' प्रजननमेतत् प्रजननं यत्संवत्सर ऋचाऽग्नौ समिधमादधाति, प्रजननादेवैनन्तत् प्रजनयिता प्रजनयत्यवत्यत्तुर्वै पुरुषो न हि तद्वेद यदृतुमभिजायते, यद्वचैव तदाप्नोति, य एष ओदनः पच्यते, योनिरेवैषा क्रियते, यत्समिध आधीयन्ते रेतस्तत् धीयते संवत्सरो वै रेतो हित प्रजायते, ये संवत्सरे पर्य्येतेऽग्निमाधत्ते प्रजापतिरेवैनमाधत्ते, द्वादशसु रात्रीषु पुरा संवत्सरस्याधेयात्ता हि संवत्सरस्य प्रतिमा अथो तिसृष्वथो द्वयोरथो पूर्वेद्युराधेयात्, ते वा अग्निमादधानेनादित्या वा इत उत्तरमेष मेऽसुष्मिंल्लोक आयस्ते पथि रक्षन्त इयन्तदु यक्ष्यमाण प्रतिनुदन्त उच्छेषणभाजा वा आदित्या यदुच्छिष्ट यदुच्छिष्टेन समिधो अनक्ति तेभ्य एव प्रोवाच तेभ्य एव प्राच्य स्वर्गंल्लोकं यन्ति ॥ १५ ॥

प्रजापतिरथर्वा देवः स तपस्तप्त्वैतञ्चातुष्प्राश्य ब्रह्मौदनं निरमिमत, चतुर्लोक चतुर्देव चतुर्वेदं चतुर्होत्रमिति, चत्वारो वा इमे लोकाः पृथिव्यन्तरिक्ष द्यौराप इति, चत्वारो वा इमे

वै सम्भाराणामिति, तद्घोरात् क्रूरात्सलिलात्सरस उदानिन्युस्तान् वागभ्युवाचाश्वः शम्येतेति, तथेति तमृग्वेद एत्योवाचाहमश्वं शमेयमिति तस्मा अविस्रंसाय महद्भयं ससृजे, स एतां प्राचीं दिशमभेजे स होवाचाशान्तो न्वयमश्व इति। स यजुर्वेद एत्योवाचाहमश्वंशमेयमिति तस्मा अविस्रंसाय महद्भयं ससृजे, स एतां प्रतीचीन्दिशं भेजे स होवाचाशान्तो न्वयमश्व इति। त सामवेद एत्योवाचाहमश्वंशमेयमिति, केन नु त्व शमयिष्यसीति, रथन्तर नाम मे सामाघोरश्चाक्रूरश्च तेनाश्वमभिष्टूयते तस्मा अथ विस्रंसाय तदेव महद्भयं ससृजे, स एतामुदीचीन्दिशमभेजे, स सोवाचाशान्तो न्वयमश्व इति। तान्वागभ्युवाच शयुमाथर्वणं गच्छथेति, ते शयुमाथर्वणमासीनं प्राप्योचुर्नमस्ते अस्तु भगवन्नश्वं शम्येतेति। तथेति स खलु कबन्धस्याथर्वणस्य पुत्रमामन्त्रयामास विचारिन्निति, भगो इति हास्मै प्रतिशुश्रुत प्रतिशुश्रावाश्वं शम्येतेति, तथेति स खलु शान्त्युदकं चकाराथर्वणीभिश्चाङ्गिरसीभिश्चातनैर्मातृनामभिर्वास्तोष्पत्यैरिति शमयति तस्य ह स्नातस्याश्वस्याभ्युक्षितस्य सर्वेभ्यो रोमगर्तेभ्योऽङ्गारा आशीर्य्यन्त सोऽश्वस्तुष्टो नमस्कारं चकार नमः शयुमाथर्वणाय यो मा यज्ञमचीक्लपदिति, भविष्यन्ति ह वा अतोऽन्ये ब्राह्मणा लघुसम्भारतमास्त आदित्यस्य पद आधास्यन्त्यनडुहो वत्सस्याजस्य श्रवणस्य ब्रह्मचारिणो वा एतद्वा आदित्यस्य पदं यञ्जूषिस्तथैव पदं आहितं भविष्यतीति सोऽग्नौ प्रणीयमानेऽश्वेऽन्वारब्धे ब्रह्मा यजमानं वाचयति यदक्रन्दः प्रथमं जायमान इति पञ्च, तं ब्राह्मणा उपवदन्ति तद्ब्रह्मोपाकुरुते एष ह वै विद्वान्सर्वविद् ब्रह्मा यद्भृग्वङ्गिरोविदिति ब्राह्मणम्॥ १८॥

देवाश्च ह वा असुराश्चास्पर्द्धन्त ते देवा इन्द्रमब्रुवन्नि

च्छंसीया, द्वितीयं वरं वृणीष्वेति वृणा३ इति स वरमवृणीतास्यामेव मा होत्रायां वायुभूतं पुनन्तस्तुवन्त आसन्तस्तिष्ठेयुरिति तं तस्यामेव होत्रायां वायुभूतं पुनन्तस्तुवन्त आसन्तोऽतिष्ठस्तं यत्तस्यामेव होत्रायां वायुभूतं पुनन्तस्तुवन्त आसन्तस्तिष्ठंस्तत् पोताऽभवत्तत् पोतुः पोतृत्वं सैषा वायव्या होत्रा यत् पोत्रीया, तृतीयं वरं वृणीष्वेति वृणा३ इति स वरमवृणीतास्यामेव मा होत्रायामग्निभूतमिन्धानाः पुनन्तस्तुवन्त आसन्तस्तिष्ठेयुरिति तन्तस्यामेव होत्रायामग्निभूतमिन्धाना पुनन्तस्तुवन्त आसन्तोऽतिष्ठन्त यत्तस्यामेव होत्रायामग्निभूतमिन्धानाः पुनन्तस्तुवन्तः आसन्तस्तिष्ठंस्तदाग्नीध्रोऽभवत्तदाग्नीध्रस्याग्नीध्रत्वं सैषाग्नेयी होत्रा यदाग्नीध्रीयेति ब्राह्मणम् ॥ १९ ॥

ब्राह्मणो ह वा इममग्निं वैश्वानरं बभार। सोऽयमग्निर्वैश्वानरो ब्राह्मणेन भ्रियमाण इमांल्लोकान् जनयतेऽथायमीक्षतेऽग्निर्जातवेदा ब्राह्मणद्वितीयो ह वा अयमिदमग्निर्वैश्वानरो ज्वलति हन्ताहं यन्मयि तेज इन्द्रियं वीर्य्यन्तद्दर्शया-म्युत वै मा बिभ्रियादिति, स आत्मानमाप्याययेत्त पयोधोक्तमिमं ब्राह्मणं दर्शयित्वाऽऽत्मन्यजुहोत् स द्वितीयमात्मानमाप्याययेत्त घृतमधोक्तमिमं ब्राह्मणं दर्शयित्वा आत्मन्यजुहोत्, स तृतीयमात्मानमाप्याययेत्तदिदं विश्वं विक्लतमन्नाद्यमधोक्तमिमं ब्राह्मणं दर्शयित्वाऽऽत्मन्यजुहोत्, स चतुर्थमात्मानमाप्याययेत्तेन ब्राह्मणस्य जायां विराजमपश्यत् तामस्मै प्रायच्छत् स आत्मा अपित्वमभवत्तत इममग्निं वैश्वानरं परास्युर्ब्राह्मणोऽग्निं जातवेदसमधत्त, सोऽयमब्रवीत् अग्ने जातवेदो अभिनिधेहि मेहीति तस्य हैतं नामाधत्ताघोरं चाकृष्य, सोऽश्वोऽभवत्तस्मादश्वो वहेत रथ न भवति पृष्ठेन

देवानह्निडत्ते देवा ब्रह्माणमुपाधावन् स नैवागायन्नानृत्यत् सैषाग्लैपा कारुविदा नाम त वा एतमाग्लाहृत सन्तमाग्ला-गृध इत्याचक्षते, परोक्षेण परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विष। य एष ब्राह्मणो गायनो वा नर्त्तनो वा भवति तमाग्लागृध इत्याचक्षते, तस्माद् ब्राह्मणो नेव गायेन्नानृत्ये-न्माग्लागृध' स्यात्तस्माद् ब्राह्मं पूर्वं हविरपरं प्राजापत्यं प्राजापत्यात् ब्राह्मणमेवोत्तममिति ब्राह्मणम् ॥ २१ ॥

अथर्वाणश्च ह वा आङ्गिरसश्च भृगुचक्षुषो तद् ब्रह्माभिव्य-पश्यस्तदजानन्वय वा इद सर्वं यद्भृग्वङ्गिरस इति। ते देवा ब्राह्मं हविर्यत्सान्तपनेऽग्नावजुहवुरेतद्वै ब्राह्मं हविर्य-त्सान्तपनेऽग्नौ हूयते, एष ह वै सान्तपनोऽग्निर्यद् ब्राह्मण-स्तस्योर्ल्लयोर्ज्ञो देवा अभजन्त सुमनस एव स्वधा पितर श्रद्धया स्वर्गं लोकं ब्राह्मणास्तेन सुन्वन्त्यपयोऽन्तत' स्त्रिय केवल आत्मन्यवारुन्धत वाह्या उभयेन सुन्वन्ति, यद्वै यज्ञे ब्राह्मं हविर्न निरूप्येतानृजव प्राजापत्यहविषो मनुष्या जायेरन्नसौ यान्लोकान् भृक्षिति पिता श्लोप आहवनीयस्य गार्हपत्यस्य दक्षिणाग्नेर्योऽग्निहोत्रं जुहोतीति, देवा प्रिये धामनि मदन्ति तेषामेषोऽग्नि सान्तपनश्रेष्ठो भवत्येतस्य वाचि तृप्तायामग्निस्तृप्यति, प्राणे तृप्ते वायुस्तृप्यति, चक्षुषी तृप्ते आदित्यस्तृप्यति, मनसि तृप्ते चन्द्रमास्तृप्यति, श्रोत्रे तृप्ते दिशश्चान्तर्देशाश्च तृप्यन्ति, स्नेहेषु तृप्तेष्वापस्तृप्यन्ति, लोमेषु तृप्तेष्वोपधिवनस्पतयस्तृप्यन्ति, शरीरे तृप्ते पृथिवी तृप्यत्येवमेषोऽग्निः सान्तपन श्रेष्ठस्तृप्त' सर्वांस्तृप्तास्तर्पयतीति ब्राह्मणम् ॥ २२ ॥

सान्तपना इद हविरित्येष ह वै सान्तपनोऽग्निर्यद् ब्राह्मणो यस्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनाम-

सामविदमेवोद्गातारं वृणीष्व स ह्यौद्गात्रं वेदादित्यो वा उद्गाता द्यौर्वै साम्नामायतनमादित्यो देवता जागतं छन्दः स्वरिति शुक्रं तस्मात्तमेवोद्गातारं वृणीष्वेत्येतस्य लोकस्येत्येवाथ चेन्नैवंविदमुद्गातारं वृणुते, उत्तरत एवैषां यज्ञो रिच्यते । अथर्वाङ्गिरोविदमेव ब्रह्माणं वृणीष्व स हि ब्रह्मत्वं वेद चन्द्रमा वै ब्रह्मा आपो वै भृग्वङ्गिरसामायतनं चन्द्रमा देवता वैद्युतमोष्णिक्काकुभे छन्दसी ओमित्यथर्वणां शुक्रं जनदित्यङ्गिरसां, तस्मात्तमेव ब्रह्माणं वृणीष्वेत्येतस्य लोकस्य जितय एतस्य लोकस्य विजितय एतस्य लोकस्य सञ्जितय एतस्य लोकस्यावरुद्धय एतस्य लोकस्य व्यृद्धय एतस्य लोकस्य समृद्धय एतस्य लोकस्योदात्तय एतस्य लोकस्य व्याप्तय एतस्य लोकस्य पर्याप्तय एतस्य लोकस्य समाप्तयेऽथ चेन्नैवंविदं ब्राह्मणं वृणुते, दक्षिणत एवैषां यज्ञो रिच्यते ॥ २४ ॥

इति अथर्ववेदे गोपथब्राह्मणपूर्वभागे द्वितीयः प्रपाठकः समाप्तः ।

---

## अथ तृतीयः प्रपाठकः ।

ओं दक्षिणाप्रवणा भूमिर्दक्षिणत आपो वहन्ति तस्माद्यज्ञास्तद्भूमेरुन्नततरमिव भवति यत्र भृग्वङ्गिरसो विष्ठास्तद्यथा आप इमाल्लोकानभिवहन्त्येवमेव भृग्वङ्गिरसः सर्वान् देवानभिवहन्त्येवमेवैषा व्याहृतिः सर्वान् वेदानभिवहन्त्यो३मिति ऋचामो१मिति यजुषामो१मिति साम्नामो१मिति सर्वस्याहाभिवादस्त ह स्मैतदुत्तरं यज्ञे विद्वांसः कुर्वन्ति देवा ब्रह्माण आगच्छत आगच्छतेत्येते वै देवा ब्रह्माणो यद्भृग्वङ्गिरसस्तानेवैतद् वृणानास्तान् वृणानां ह्वयन्तो मन्यन्ते नान्यो भृग्वङ्गिरोविद् वृतो यज्ञमागच्छन् यज्ञस्य तेजसा तेज आप्नो-

मेऽस्य यज्ञस्यान्तरगादिति, तस्माद्‌ब्रह्मा स्तुते बहिष्पवमाने वाचोयम्यमुपांश्वन्तर्यामाभ्यामथ ये पवमान उद्‌चुस्तेष्वथ यानि च स्तोत्राणि च शस्त्राण्यावषट्‌कारात्तेषु स यदृङ्मो भ्रेषन्नियच्छेदों भूर्जनदिति गार्हपत्ये जुहुयात्, यदि यजुष्ट ओं भुवो जनदिति दक्षिणाग्नौ जुहुयात्, यदि सामत ओं स्वर्जनदित्याहवनीये जुहुयात्, यद्यनाज्ञाता ब्रह्मता ओं भूर्भुवः स्वर्जनदोमित्याहवनीय एव जुहुयात्, तद्वाकोवाक्यस्यर्चां यजुषां साम्नामथर्वाङ्गिरसामथापि वेदानां रसेन यज्ञस्य विरिष्टं सन्धीयते, तद्यथा लवणेनेत्युक्तं, तद्यथा उभयपात्पुरुषो यन्नुभयचक्रो वा रथो वर्त्तमानोऽभ्रेषं न्येत्येवमेवास्य यज्ञोऽभ्रेषं न्येति, यज्ञस्याभ्रेषमनुयजमानोऽभ्रेषं न्येति, यजमानस्याभ्रेषमन्वृत्विजोऽभ्रेषं नियन्ति, ऋत्विजामभ्रेषमनुदक्षिणा अभ्रेषं नियन्ति, दक्षिणानामभ्रेषमनुयजमानं पुत्रपशुभिरभ्रेषं न्येति, पुत्रपशूनामभ्रेषमनुयजमानं स्वर्गेण लोकेनाभ्रेषं न्येति, स्वर्गस्य लोकस्याभ्रेषमनु तस्यार्द्धस्य योगक्षेमोऽभ्रेषं न्येति, यस्मिन्नर्द्धे यजन्त इति ब्राह्मणम्॥ २॥

तद्यदौदुम्बर्य्यांन्म आसिष्ट, हिङ्कृणोत् मे प्रास्तावीन्म उदके आसीत् मे सुब्रह्मण्यामाह्वासीदित्युक्ताचे दक्षिणा नीयन्ते, अग्रहान् मेऽग्रहीत् प्राचारीन्मेऽशुन्धुवन् मे समनसस्कार्षीदयाचीन्मेऽश्रासीन्मेऽवषट्‌कार्षीन्म इत्यध्वर्य्यवे होतृषदन आसिष्ट, अयाचीन्मेऽश्रासीन्मेऽवषट्‌कार्षीन्म इति होत्रे देवयजन मेऽचीक्लृपद् ब्रह्मा साद मेऽसीषदद् ब्रह्मजपान्मेऽजपीत् पुरस्ताद्धोम-संस्थित-होमान्मेऽहौषीदयाचीन्मेऽश्रासीन्मेऽवषट्‌कार्षीन् म इति ब्रह्मणे भूयिष्ठेन मा ब्रह्मणाकार्षीदित्येतद्वै भूयिष्ठं ब्रह्म यद्भृग्वङ्गिरस, येऽङ्गिरसो येऽङ्गिरसः स रसः, येऽथर्वाणो येऽथर्वाणस्तद्भेषजं, यद्भेषजं तदमृतं, यदमृतं तद् ब्रह्म, स वा

योरूप विद्यात् कस्मादिमाः प्रजाः शिरस्तः प्रथमं पलिता-भवन्ति, कस्मादन्ततः सर्वा एव पलिता भवन्ति, यस्तद्दर्श-पूर्णमासयोरूप विद्यात् कस्मादिमा प्रजा अदन्तिका जायन्ते, कस्मादासामपरमिव जायन्ते, यस्तद्दर्शपूर्णमासयोरूप विद्यात् कस्मादासां सप्तवर्षाष्टवर्षाणां प्रभिद्यन्ते, कस्मादासां पुनरेव जायन्ते, कस्मादन्तत सर्व एव प्रभिद्यन्ते, यस्तद्दर्शपूर्णमासयोरूप विद्यात् कस्मादधरे दन्ताः पूर्वे जायन्ते, पर उत्तरे, यस्तद्दर्शपूर्ण-मासयोरूप विद्यात कस्मादधरे दन्ता अणीयांसो ह्रसीयांसः प्रथीयांसो वर्षीयांस उत्तरे, यस्तद्दर्शपूर्णमासयोरूप विद्यात् कस्मादिमौ दंष्ट्रौ दीर्घतरौ, कस्मात्समे इव जम्भे, यस्तद्दर्श-पूर्णमासयोरूप विद्यात् कस्मादिमे श्रोत्रेऽन्ततः समे इव दीर्णे, यस्तद्दर्शपूर्णमासयोरूप विद्यात् कस्मात् पुमांसः श्मश्रुवन्तोऽश्मश्रुव स्त्रिय, यस्तद्दर्शपूर्णमासयोरूप विद्यात् कस्मादासां सन्ततमिव शरीरं भवति, कस्मादासामस्थीनि दृढतराणीव भवन्ति, यस्तद्दर्शपूर्णमासयोरूप विद्यात् कस्मा-दासां प्रथमे वयसि रेतः सिक्तं न सम्भवति, कस्मादासां मध्यमे वयसि रेतः सिक्तं सम्भवति, कस्मादासामुत्तमे वयसि रेत सिक्तं न सम्भवति, यस्तद्दर्शपूर्णमासयोरूप विद्यात् कस्मादिदं शिश्नमुच्चश्च एति नीचीपद्यते कस्मात्तत्कादपा-नम् ॥ ७ ॥

अथ यः पुरस्तादष्टावाज्यभागान् विद्यात् मध्यत पञ्च हविर्भागा, षट् प्राजापत्या उपरिष्टादष्टावाज्यभागान् विद्यात् अथ यो गायत्रीं हरिणीं ज्योतिष्पक्षां सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं विद्यात् अथ यः पङ्क्तिं पञ्चपदां सप्तदशाक्षरां सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं विद्यात् अस्मै ह निष्कं प्रयच्छन्नुवाचानूचानो ह वै खैदायना स

जपित्वाऽभिहिङ्कृणोति तस्मात् पुमांसः श्मश्रुवन्तोऽश्मश्रुव स्त्रिय', यत् सामिधेनी' सतत्त्वमाह तस्मादासां सन्ततमिव शरीर भवति, यत् सामिधेन्यः काष्ठहविषो भवन्ति तस्मादा- सामस्थीनि दृढतराणीव भवन्ति, यत् प्रयाजा आज्यहविषो भवन्ति तस्मादासां प्रथमे वयसि रेत' सिक्तं न सम्भवति, यन्मध्ये हविषा दध्ना च पुरोडाशेन च प्रचरन्ति तस्मादासां मध्यमे वयसि रेत. सिक्तं सम्भवति, यदनुयाजा आज्यहविषो भवन्ति तस्मादासामुत्तमे वयसि रेत. सिक्तं न सम्भवति, यदु- त्तमेऽनुयाजे सकृदपानिति तस्मादिदं शिश्नमुच्चैश्च एति, नीचौ- पद्यते, यन्नापानेत् सकृच्छून स्याद्यन्मुहुरपानेत् सकृत्यन्न स्यात् तस्मात् सकृदपानिति नेत् सकृच्छून स्यात् सकृत्यन्नं वेति ॥ ८ ॥

अथ ये पुरस्तादष्टावाज्यभागा' पञ्च प्रयाजा द्वावाघारौ द्वावाज्यभागावाग्नेया आज्यभागाना प्रथमः सौम्यो द्वितीयो हविर्भागाना हविर्ध्रुव सौम्यमाग्नेय पुरोडाशोऽग्निषोमीय उपांशुयाजोऽग्नीषोमीय' पुरोडाशोऽग्नि' स्विष्टकृदित्येते मध्यत. पञ्च हविर्भागा अथ ये षट् प्राजापत्या इडा च प्राशित्रञ्च यच्चाग्नीध्रायावद्यति. ब्रह्मभागो यजमानभागोऽन्वाहार्य्य एव षष्ठोऽथ य उपरिष्टादष्टावाज्यभागास्त्रयोऽनुयाजाश्चत्वार: पत्नी- सयाजा' समिष्टयजुरष्टमम्थ या गायत्री हरिणी ज्योतिष्पक्षा सर्वैर्यज्ञैर्यजमान स्वर्गं लोकमभिवहति, वेदिरेव सा, तस्य ये पुरस्तादष्टावाज्यभागा स दक्षिण पक्षोऽथ ये उपरिष्टादष्टा- वाज्यभागा स उत्तर' पक्ष , हवीष्यात्मा, गार्हपत्यो जघन- माहवनीय शिर , सौवर्णराजतौ पक्षौ, तद्यदादित्य' पुरस्तात् पर्य्यन्त न.पश्यन्ति तस्मादज्योतिष्क उत्तरो भवति। अथ या पङ्क्ति. पञ्चपदा सप्तदशाक्षरा सर्वैर्यज्ञैर्यजमान स्वर्गं लोक-

मवमार्ष्टीं, किन्त्वेवत्यं प्रातरुन्मार्ष्टीरित्येतच्चेद्वेत्थ, गौतम इत,
चेदथु न वेत्थाहुत त इति ब्राह्मणम् ॥ ११ ॥

स हो वाच, रौद्रं मे गवीडाया, मानव्यमुपह्वतायां, वायव्यमुपसृष्टाया, वैराज वत्समुन्नीयमान, जागतमुन्नीतम्, आश्विन दुह्यमान, सौम्यं दुग्ध, वार्हस्पत्य प्रक्रम्यमाण, द्यावापृथिव्य क्रियमाणम्, आग्नेयमधिश्रीयमाण, वैश्वानरोयमधिश्रित, वैष्णवमभ्यवज्वाल्यमान, मारुतमभ्यवज्वालितं, पौष्ण समुद्वान्त, वारुण विष्यन्न, सारस्वतमद्भि प्रत्यानीत, त्वाष्ट्रमुद्वास्यमान, धात्रमुद्वासित, वैश्वदेवमुन्नीयमान, सावित्रमुन्नीत, वार्हस्पत्य प्रक्रम्यमाण, द्यावापृथिव्य क्रियमाणम्, ऐन्द्रमुपसाद्यमान, बलायोपसन्नम्, आग्नेयी समिद्, या प्रथमासाहुतिमहौष मामेव तत् स्वर्गे लोकेऽधा, यद्गार्हपत्यमवेच्चिषमस्य लोकस्य सन्तत्यै, प्राजापत्योत्तराहुति, तस्मात् पूर्णतरा मनसैव सा, यद्धुत्वा स्रुच त्रिरुदञ्चमुन्नैष रुद्रास्तेनाप्रैष, यद्वर्हिषि स्रुच निधायोम्मृज्योत्तरत पाणी निर्माज्य-मोषधिवनस्पतींस्तेनाप्रैष, यद् द्वितीयमुन्मृज्य पितुरपवीत कृत्वा दक्षिणत पितृभ्य स्वधामकार्ष पितॄस्तेनाप्रैष, यत् प्रथमम्प्राशिष प्राणास्तेनाप्रैष, यद् द्वितीय गर्भास्तेन, तस्मादनश्नन्तो गर्भा जीवन्ति, यदन्तत. सर्वमेवाप्राशिष विश्वान्देवास्तेनाप्रैष, यदप्रक्षालितयोदक स्रुचा न्यनैष सर्पेतरजनास्तेनाप्रैष, यत् प्रक्षालितया सर्पपुण्यजनास्तेन, यदपरेणाहवनीयमुदक स्रुचा न्यनैष गन्धर्वाप्सरसस्तेनाप्रैष, यत् स्रुच स्रुचञ्च प्रत्यवाप्स सप्तर्षीस्तेनाप्रैष, यद्रात्रौ स्रुग्दण्डमवमार्क्ष्म ये रात्रौ सविशन्ति दक्षिणास्तासुन्नैष, यत् प्रातरुन्मार्क्ष्म ये प्रात प्रव्रजन्ति दक्षिणा स्तासुन्नैषमिति ब्राह्मणम् ॥ १२ ॥

भवमार्ष्टीः, किन्देवत्य प्रातरुन्मार्ष्टीरित्येतच्चेद्वेत्थ, गौतम हुतं, वेदयथु न वेत्थाहुत त इति ब्राह्मणम् ॥ ११ ॥

स होवाच, रौद्रं मे गवीडायां, मानव्यमुपह्वतायां, वायव्यमुपह्वष्टायां, वैराजं वत्समुन्नीयमानं, जागतमुन्नीतम्, आश्विनं दुह्यमानं, सौम्यं दुग्धं, वार्हस्पत्यं प्रक्रम्यमाणं, द्यावापृथिव्यं क्रियमाणम्, आग्नेयमधिश्रीयमाणं, वैश्वानरीयमविन्धितं, वैष्णवमभ्यवज्वाल्यमानं, मारुतमभ्यवज्वालितं, पौष्णं समुद्वान्तं, वारुणं विष्यन्नं, सारस्वतमद्भिः प्रत्यानीतं, त्वाष्ट्रमुद्वास्यमानं, धात्रमुद्वासितं, वैश्वदेवमुन्नीयमानं, सावित्रमुन्नीतं, वार्हस्पत्यं प्रक्रम्यमाणं, द्यावापृथिव्यं क्रियमाणम्, ऐन्द्रमुपसाद्यमानं, बलायोपसन्नम्, आग्नेयी समिद्, या प्रथमामाहुतिमहौष मामेव तत् स्वर्गं लोकेऽधां, यद्गार्हपत्यमवेक्षिषमस्य लोकस्य सन्तत्यै, प्राजापत्योत्तराहुतिः, तस्मात् पूर्णतरा मनसेव सा, यद्धुत्वा स्रुचं विरुदग्नसुन्नैष रुद्रांस्तेनाप्रैषं, यद्बर्हिषि स्रुचं निधायोत्सृज्योत्तरतः पाणी निर्मृज्य-मोषधिवनस्पतींस्तेनाप्रैषं, यद् द्वितीयमुन्मृज्य पितुरुपवीतं कृत्वा दक्षिणतः पितृभ्यः स्वधामकार्षं पितॄंस्तेनाप्रैषं, यत् प्रथमम्प्राशिषं प्राणांस्तेनाप्रैषं, यद् द्वितीयं गर्भांस्तेन, तस्मादनश्नन्तो गर्भा जीवन्ति, यदन्ततः सर्वमेवाप्राशिषं विश्वान्देवांस्तेनाप्रैषं, यदप्रक्षालितयोदकं स्रुचा न्यनैषं सर्पेतरजनांस्तेनाप्रैषं, यत् प्रक्षालितया सर्पपुण्यजनांस्तेन, यदपरेणाहवनीयमुदकं स्रुचा न्यनैषं गन्धर्वाप्सरसस्तेनाप्रैषं, यत् स्रुत्र स्रुचञ्च प्रत्ययासं सप्तऋषींस्तेनाप्रैषं, यद्रात्रौ स्रुग्दण्डमवमार्क्ष्यं ये रात्रौ संविशन्ति दक्षिणास्तासुन्नैषं, यत् प्रातरुन्मार्क्ष्यं ये प्रातः प्रव्रजन्ति दक्षिणास्तासुन्नैषमिति ब्राह्मणम् ॥ १२ ॥

एवमेवैतद्वो यथा भगवानाह पृच्छामि त्वेव भवन्तमिति, पृच्छ प्राचीनयोग्येति। यस्य सायमन्वय उपसमाहिता स्यु सर्वे स्वनयेयु प्रणाहितानि यद्यपामास्तुपसमाहितानि स्युरथ चेद् दक्षिणाग्निरुद्वायात् किं वा ततो भयमागच्छेदिति चिममस्य पशो प्रैति यो विद्वान् जुहोति विद्यया लेवाहमभिजुहोमीति का ते विद्या का प्रायश्चित्तिरिति गार्हपत्या द्दक्षिणाग्निं प्रणीय प्राचोऽङ्गारानुद्धृत्य प्राणापानाभ्यां स्वाहेति जुहुयादथ प्रातर्यथास्थानमग्नीनुपसमाधाय यथापूर्वं जुहुयाद्वा मे विद्या सा प्रायश्चित्तिरिति। अथ चेदाहवनीय उद्वायात् किं वा ततो भयमागच्छेदिति चिममस्य पुत्र प्रैति यो विद्वान् जुहोति विद्यया लेवाहमभिजुहोमीति का ते विद्या का प्रायश्चित्तिरिति गार्हपत्यादाहवनीयं प्रणीय प्रतीचोऽङ्गारानुद्धृत्य समानव्यानाभ्यां स्वाहेति जुहुयादथ प्रातर्यथास्थानमग्नीनुपसमाधाय यथापूर्वं जुहुयात् सा मे विद्या सा प्रायश्चित्तिरिति। अथ चेद्गार्हपत्य उद्वायात् किं वा ततो भयमागच्छेदिति क्षिप्रं यजमानः प्रैति यो विद्वान् जुहोति विद्ययालेवाहमभिजुहोमि इति का ते विद्या का प्रायश्चित्तिरिति समवसमाहवनीयं दक्षिणेन दक्षिणाग्निं परिहृत्य गार्हपत्य आयतने प्रतिष्ठाप्य ततः आहवनीयं प्रणीय उदीचोऽङ्गारानुद्धृत्योदानरूपाभ्यां स्वाहेति जुहुयादथ प्रातर्यथास्थानमग्नीनुपसमाधाय यथापूर्वं जुहुयात् सा मे विद्या सा प्रायश्चित्तिरित्यथ चेत्सर्वेऽग्नय उद्वायेयु किं वा ततो भयमागच्छेदिति क्षिप्रं यजमानः सर्वज्यानिमृच्छतीति यो विद्वान् जुहोति विद्यया लेवाहमभिजुहोमीति का ते विद्या का प्रायश्चित्ति-रित्यामसुद्दिन ग्रामस्थिपनाम्यायतनानि परिश्रित्य चौमसुपसमाधाय मिश्रित्य प्राणापानाभ्यां स्वाहा समानव्या

नाभ्यां स्वाहा उदानरूपाभ्या स्वाहेति जुहुयादथ प्रातर्यथास्थानमग्नीनुपसमाधाय यथापुरस्ज्जुहुयात् सा मे विद्या सा प्रायश्चित्तिरित्यथ चेन्नाग्निं जनयितुं शक्नुयुर्न कुतश्चन वातो वायात् किं वा ततो भयमागच्छेदिति मोघमस्येष्टं च हुतञ्च भवति, यो विद्वा जुहोति विद्यया त्वेवाहमभिजुहोमीति, का ते विद्या का प्रायश्चित्तिरित्यानडुहेनैव शकृत्पिण्डेनाग्न्यायतनानि परिलिप्य होम्यमुपसाद्यवात आवातु भेषजमिति सूक्तेनाप्स्वेव जुहुयादथ प्रातरग्निं निर्मथ्य यथास्थानमग्नीनुपसमाधाय यथापुरं जुहुयात् सा मे विद्या सा प्रायश्चित्तिरिति ब्राह्मणम् ॥ १३ ॥

एवमेवैतद् भो भगवन् यथा भवानाहोपायामित्येव भवन्तमित्येव चेन्नावक्ष्यो मूर्धा ते व्यपतिष्यतीति हन्त तु ते तद्वक्ष्यामि यथा ते न व्यपतिष्यतीति, यो ह वा एवंविद्वानश्नाति च पिबति च वाक् तेन तृप्यति, वाचि तृप्तायामग्निस्तृप्यत्यग्नौ तृप्ते पृथिवी तृप्यति, पृथिव्यां तृप्तायां यानि पृथिव्यां भूतान्यन्वायत्तानि तानि तृप्यन्ति, यो ह वा एवंविद्वानश्नाति च पिबति च प्राणस्तेन तृप्यति, प्राणे तृप्ते वायुस्तृप्यति, वायौ तृप्तेऽन्तरिक्षं तृप्यति अन्तरिक्षे तृप्ते यान्यन्तरिक्षे भूतान्यन्वायत्तानि तानि तृप्यन्ति, यो ह वा एवं विद्वानश्नाति च पिबति च चक्षुस्तेन तृप्यति, चक्षुषी तृप्ते आदित्यस्तृप्यत्यादित्ये तृप्ते द्यौस्तृप्यति, दिवि तृप्तायां यानि दिवि भूतान्यन्वायत्तानि तानि तृप्यन्ति, यो ह वा एवं विद्वानश्नाति च पिबति च मनस्तेन तृप्यति, मनसि तृप्ते चन्द्रमास्तृप्यति, चन्द्रमसि तृप्ते आपस्तृप्यन्त्यप्सु तृप्तासु यान्यप्सु भूतान्यन्वायत्तानि तानि तृप्यन्ति, यो ह वा एवंविद्वानश्नाति च पिबति च श्रोत्रं तेन तृप्यति, श्रोत्रे तृप्ते दिशश्चान्तर्देशाश्च तृप्यन्ति,

दिक्षु चान्तर्देशेषु च ऋक्षेषु च यानि दिक्षु चान्तर्देशेषु च
भूतान्यन्वायत्तानि तानि तृप्यन्ति यो ह वा एवं विद्वानश्नाति
च पिबति च तस्यायमेव दक्षिणः पाणिर्जुहूः सव्य उपभृत्
मध्यो ध्रुवाऽन्न हविः प्राणा ज्योतींषि सर्वेष्टं सदा हुतं
सदाग्निहोत्रं पायितमग्निहोत्रं भवति य एवं वेद यश्चैवं विद्वा
नग्निहोत्रं जुहोतीति ब्राह्मणम् ॥ १४ ॥

प्रियमेधा ह वै भरद्वाजा यज्ञविदो मन्यमानास्ते ह स्म
न कञ्चन वेदविदमुपयन्ति ते सर्वमविदुस्ते सर्वेऽविदुस्त्व
ग्निहोत्रमेव न समवादयन्त तेषामेकः सकृदग्निहोत्रम
जुहोत् द्विरेकस्त्रिरेकस्तेषां यः सकृदग्निहोत्रमजुहोत्तमितराव
पृच्छतां कस्मै त्वं जुहोषीति एकधा वा इदं सर्वं प्रजापतिः
प्रजापतय एवाहं सायं जुहोमीति प्रजापतये प्रातरिति।
तेषां यो द्विरजुहोत् तमितरावपृच्छतां कस्मै त्वं जुहो
षीति अग्नये प्रजापतय इति सायं सूर्याय प्रजापतय
इति प्रातः। तेषां यस्त्रिरजुहोत्तमितरावपृच्छतां कस्मै त्वं
जुहोषीत्यग्नये प्रजापतयेऽनुमतय इति सायं सूर्याय प्रजा-
पतयेऽग्नये स्विष्टकृत इति प्रातः। तेषां यो द्विरजुहोत्स
आर्ध्नोद् भूयिष्ठोऽभवत्प्रजया पितरौ त्रिया पितरावभ्याक्राम
तस्य ह प्रजामितरयोः प्रजाः या तत्समुपेयातां तस्माद्
द्विर्होतव्यं यजुषा चैव मनसा च यामेव स द्विरार्ध्नोति
तामश्नाति य एवं वेद यश्चैवंविद्वानग्निहोत्रं जुहोतीति
ब्राह्मणम् ॥ १५ ॥

आहाथ कुतः सम्भूता किं प्रजाता किं वाऽस्या मोक्षं
वत्सदरा कतिपदा किम्पूर्णावसाना क्वचित् स्थिता
किमधिष्ठाना ब्रूहि स्वाहाया यदेवतं रूपम्। स्वाहा
वै सम्भूता ब्रह्मणः प्रजाता सामसायनसगोत्रा, द्वे पयसी,

एकं पदं, त्रयश्च वर्णाः शुक्लः पद्मः सुवर्ण इति, सर्वच्छन्दसा वेदेषु समासभूतेर्वोच्छ्वासा वर्णास्ते चत्वारो वेदा शरीरे, षडङ्गान्योषधिवनस्पतयो लोमानि, चक्षुषी सूर्य्याचन्द्रमसौ, सा स्वाहा सा स्वधा सैषा यज्ञेषु वषट्कारभूता प्रयुज्यते, तस्या अग्निर्दैवतं ब्राह्मणो रूपमिति ब्राह्मणम् ॥ १६ ॥

अथापि कारवो ह नाम ऋषयो अल्पस्वा आसस्त इममेकगुमग्निष्टोमं ददृशुस्तमाहरस्तेनायजन्त ते स्वर्य्ययु, स य इच्छेत् स्वर्यायीति स एतेनैकगुनाऽग्निष्टोमेन यजेतेति ब्राह्मणम् ॥ १७ ॥

अथातः सवनीयस्य पशोर्विभागं व्याख्यास्यामः । उद्धृत्यावदानानि, हनू सजिह्वे प्रस्तोतुः, कण्ठः सकाकुदः प्रतिहर्त्तुः, श्येनं पक्ष उद्गातुर्दक्षिणं पार्श्वं सांसमध्वर्य्योः, सव्यमुपगातॄणां, सव्योऽसः प्रतिप्रस्थातुर्दक्षिणा श्रोणिरथ्यास्त्रौ ब्रह्मणोऽवरसक्थं ब्राह्मणाच्छंसिनः, ऊरुः पोतुः, सव्या श्रोणिर्होतुरवरसक्थं मैत्रावरुणस्योरुरच्छावाकस्य, दक्षिणा दोर्नेष्टुः, सव्या सदस्यस्य, सदश्चानूकश्च गृहपतेर्जाघनी पत्न्यास्तां सा ब्राह्मणेन प्रतिग्राहयति, वनिष्टुर्हृदयं वृक्कौ चाङ्गुल्यानि दक्षिणो बाहुराग्नीध्रस्य, सव्य आत्रेयस्य, दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य, सव्यौ पादौ गृहपत्न्या व्रतप्रदायाः, सहैवैनयोरोष्ठस्तं गृहपतिरेवानुशास्ति मणिजाश्च स्कन्धास्तिस्रश्च कीकसा ग्रावस्तुतस्तिस्रश्चैव कीकसा अर्द्धश्चापानस्योन्नेतुरतं ऊर्द्धं चमसाध्वर्य्यूणां क्लोमा शमयितुः, शिरः सुब्रह्मण्यस्य, यश्च सुत्यामाह्वयते तस्य चर्म तथा खलु षट्त्रिंशत्सम्पद्यन्ते षट्त्रिंशदवदाना गौः षट्त्रिंशदक्षरा बृहती, बार्हतो वै स्वर्गो लोकः बृहत्या वै देवा स्वर्गं लोकं यजन्ते, बृहत्या स्वर्गे लोके प्रतिष्ठति, प्रतितिष्ठति प्रजया पशुभिर्य एवं विभ-

हैतोरिति विद्योतमाने स्तनयत्यथो वर्षति वायव्यमभिषुखन्ति वै देवाः सोमञ्च भक्षयन्ति तदभिषुखन्ति ब्राह्मणाः शुश्रुवांसोऽनूचानास्तेषां सर्वरसभक्षाः पितृपितामहा भवन्ति, स दैवे न ध्यायेत् सस्थितेनाधीयेतेति ब्राह्मणम् ॥ १९ ॥

समावृत्त आचार्य्या निषेदुस्तान् ह यज्ञो दीक्षिष्यमाणानां ब्राह्मणरूपं कृत्वोपोदेयायेत्यश्लेशोपशमवस्तुहन्त वोऽह मध्ये दीक्षा इति, त ऊचुर्नैव त्वा विद्मः न जानीमः को हीदं विज्ञायमानेन सह दीक्षिष्यसीति, यन्विद दीक्षिष्यध्वे भूयो न दीक्षिष्यध्वेऽथ वा उ एक दीक्षयिष्यथ स वै तर्हि मोक्षिष्यथ मोक्षिष्यति वो यज्ञ. सर्वे ते दीक्षयिष्यतेत्यथ वा उ एक दीक्षयिष्यथ ते वा अहीनर्त्विजो गृहपतयो भविष्यथ, ते तूष्णीं ध्यायन्त आसाञ्चक्रिरे, सहोवाच किन्नु तूष्णीमाध्वे भूयो व. पृच्छामः पृच्छतेति यन्विदं दीक्षिष्यध्व उपयेम एतस्मिन् सवत्सरे मिथुन चरिष्यथ नोपेष्यथेति धिगिति होचु, कथ नु दीक्षिता उपेष्यामो नोपेष्यामहा इति, ते वै ब्राह्मणानामभिमन्दारो भविष्यथ रेतोह वो य एतस्मिन् सवत्सरे ब्राह्मणास्तद्भविष्य स्ते बोधिमता भविष्ययेत्यथ वा उपेष्यामो नोपेष्यामहा इति, ते वै दीक्षिता अवकीर्णिनो भविष्यथ, न ह वै देवयान पन्था प्रादुर्भविष्यति तिरोवो देवयान पन्था भविष्यतीति, ते वय भगवन्तमेवोपधावाम यथा स्वस्ति संवत्सरस्योदृच समश्नवामहा इति ब्राह्मणम् ॥ २० ॥

स होवाच, द्वादश ह वै वसूनि दीक्षितादुत्क्रामन्ति, न ह वै दीक्षितोऽग्निहोत्र जुहुयात्, न पौर्णमासेन यज्ञेन यजेत, नामावास्येनाग्निन्वसीत, न पितृयज्ञेन यजेत, न तत्र गच्छेद्यत्र मनसा जिगमिषेदिष्ट्या यजेत, न वाचा यथाकथाचिदभिभाषेत, न मिथुन चरेत् नान्यस्य यथाकामस्मु

हेतोरिति विद्योतमाने स्तनयत्यथो वर्षति वायव्यमभिषु-
ण्वन्ति वै देवाः सोमञ्च भक्षयन्ति तदभिषुण्वन्ति ब्राह्मणाः
शुश्रुवासोऽनूचानास्तेषां सर्वंरसभक्षाः पितृपितामहा भवन्ति,
स दैवे न ध्यायेत् सस्थितेनाधीयेतेति ब्राह्मणम् ॥ १९ ॥

समावृत्त आचार्य्या निषेदुस्तान् ह यज्ञो दीक्षिष्यमाणानां
ब्राह्मणरूप कृत्वोपोदेयायेत्यश्चेद्दीपसमवस्तुर्हन्त वोऽहं मध्ये
दीक्षा इति, त ऊचुर्नैव त्वा विद्म न जानीम को हीद-
विज्ञायमानेन सह दीक्षिष्यसीति, यन्विद दीक्षिष्यध्वे
भूयो न दीक्षिष्यध्वेऽथ वा उ एक दीक्षयिष्यथ स वै तर्हि
मोहिष्यथ मोहिष्यति वो यज्ञ सर्वे ते दीक्षयिष्यतेत्यथ वा
उ एक दीक्षयिष्यथ ते वा अहीनर्त्विजो गृहपतयो भविष्यथ,
ते तूष्णीं ध्यायन्त आसाञ्चक्रिरे, सहोवाच किन्नु तूष्णीमाध्वे
भूयो वः पृच्छाम पृच्छतेति यन्विदं दीक्षिष्यध्व उपयेम
एतस्मिन् सवत्सरे मिथुन चरिष्याम नोपेष्यथेति धिगिति होचु,
कथ नु दीक्षिता उपेष्यामो नोपेष्यामहा इति, ते वै ब्राह्मणा-
नामभिमन्दारो भविष्यथ रेतोह वो य एतस्मिन् सवत्सरे
ब्राह्मणास्तन्नविष्य स्त वोधिमता भविष्यथेत्यथ वा उपेष्यामो
नोपेष्यामहा इति, ते वै दीक्षिता अवकीर्णिनो भविषथ,
न ह वै देवयान पन्था प्रादुर्भविष्यति तिरोवो देवयान पन्था
भविष्यतीति, ते वय भगवन्तमेवोपधावाम यथा स्वस्ति
संवत्सरस्योदृच समश्नवामहा इति ब्राह्मणम् ॥ २० ॥

स होवाच, द्वादश ह वै वसूनि दीक्षितादुत्क्रामन्ति,
न ह वै दीक्षितोऽग्निहोत्र जुहुयात्, न पौर्णमासेन यज्ञेन
यजेत, नामावास्येनाग्निन्वसीत, न पितृयज्ञेन यजेत, न
तत्र गच्छेद्यत्र मनसा जिगमिषेन्नेष्ट्या यजेत, न वाचा यथा-
कथाचिदभिभाषेत, न मिथुन चरेत् नान्यस्य यथाकामम्

कुर्वीत न पशुबन्धेन यजेत यजेत न तस्य मध्योपेतं पशुना परापद्येत् ऊर्ध्वाभिर्न वसीत कुर्यादात्मनेऽपुष्टोऽकुर्यादाहुत प्रयतपाणिश्च सञ्चरेत् मृगचर्मं परीधायातेन वपेताथ यस्य दीक्षितस्य वाग्यायता स्यात् सुप्ते वा विसृष्टौ स एतानि जपेत् ॥ २१ ॥

अग्निहोत्रस्य सायंप्रातश्च यत्र पुरस्तात् प्रत्यक्सुमौ आसन्नौ भूत्वा विश्वा सत्राविश्रता वशतिश्च माऽस्मावास्य अत्र पश्चात् प्राक्सुमाविति समार्न भगश्च मा पितरश्च यत्नो दक्षिणत उदक्सुमाविति समार्न, वायुश्च मिहिरोत्तरतो दक्षिणाक्सुमाविति समार्न एतश्च माऽर्ध चेत ऊर्ध्वसुमा विति समानम्। चतुष्च मा पञ्चमश्च यत्नोऽस्तुतोर्ध्वसुमौ आसन्नौ भूत्वा विश्वा सत्राविश्रतामिति। यत्र च वै दीक्षितो व भासनि वस्तुनि यत्ते न चैवास्य आयनार्त्तिर्भवति न च यत्रविश्वम्भसुपयायमपवर्जि पुनश्च भुमयात्वेति पुनरावाति आसयारोऽस्य सर्वेषु लोकेषु भाति य एवं वेद, यश्चैवंविद्वान् दीक्षामुपैतीति ब्राह्मणम् ॥ २२ ॥

अथ यस्य दीक्षितस्यर्तुमती जाया स्यात् प्रतिजाया प्रति-जाया स्वरूपस्थाया गो पयसि स्थालीपाकं श्रपयित्वाऽभि-घार्योदाहोऽपुत्रामिविदुषस्य गर्भवेदनपुंसवने सम्पातवन्तं कृत्वा तं परैव प्राशीयात्प्रीतो वा यत्र तथा विद्यात् एवं होम-राय दीक्षिताय दीक्षितो जाया सुम धर्मेवेत्येतिमेव ब्राह्मणेन यजेतेति ब्राह्मणम् ॥ २३ ॥

इति अथर्ववेदे गोपथब्राह्मणपूर्वभागे तृतीयः प्रपाठकः समाप्तः ।

---

# अथ चतुर्थः प्रपाठकः ।

ओं अथ वै यज्ञो योऽयं पवते, तमेत इयन्ति ये संवत्सराय दीक्षन्ते। तेषां गृहपतिः प्रथमो दीक्षते, अयं वै लोको गृहपतिरस्मिन् वा इदं सर्वं लोके प्रतिष्ठितं, गृहपता उ एव सर्वे सत्रिणः प्रतिष्ठिताः, प्रतिष्ठाया एवैनं तत् प्रतिष्ठित्यै दीक्षन्ते ॥१॥

अथ ब्रह्माणं दीक्षयति, चन्द्रमा वै ब्रह्माऽधिदैवं, मनोऽध्यात्मं, मनसैव तदोषधीः सन्दधाति, तद्या ओषधीर्वेद स एव ब्रह्मौषधीस्तदनेन लोकेन सन्दधाति, तस्मादेतावन्तरेणान्यो न दीक्षेत, स यदेतावन्तरेणान्यो दीक्षेतेमं तं लोकमोषधिभिर्व्यापादयेदुच्छोषुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ २ ॥

अथोद्गातारं दीक्षयत्यादित्यो वा उद्गाताऽधिदैवं, चक्षुरध्यात्मं, पर्जन्य आदित्यः, पर्जन्यादधिवृष्टिर्जायते, वृष्टिरेव तदोषधीः सन्दधाति, तस्मादेतावन्तरेणान्यो न दीक्षेत, स यदेतावन्तरेणान्यो दीक्षेतेमं तं लोकं वर्षेण व्यापादयेदवर्षुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ३ ॥

अथ होतारं दीक्षयत्यग्निर्वै होताऽधिदैवं, वागध्यात्ममन्नं दृष्टिः, वाचं चैव तदग्निं चान्नेन सन्दधाति, तस्मादेतावन्तरेणान्यो न दीक्षेत, स यदेतावन्तरेणान्यो दीक्षेतेमं तं लोकमन्नेन व्यापादयेदशनायुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ४ ॥

अथाध्वर्युं प्रतिप्रस्थाता दीक्षयति, वायुर्वा अध्वर्युरधिदैवं, प्राणोऽध्यात्ममन्नं दृष्टिर्वायुं चैव तत्प्राणं चान्नेन सन्दधाति, तस्मादेतावन्तरेणान्यो न दीक्षेत, स यदेतावन्तरेणान्यो दीक्षेतेमं तं लोकं प्राणेन व्यापादयेत्, प्रमायुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ५ ॥

दितिमेव तत् देवीं देवता यजन्तेऽदितिर्देवी देवता भवत्यदित्या देव्याः सायुज्यं सलोकतां यन्ति य एतदुपयन्ति अथ यत् क्रयमुपयन्ति सोममेव तत् देवं देवतां यजन्ते, सोमो देवो देवता भवति सोमस्य देवस्य सायुज्यं सलोकतां विश्वेभ्यो देवेभ्यः, दाशरात्रं दिग्भ्यो दशरात्रिकं पृष्ठ्यं षडहमेभ्यो लोकेभ्यः, छन्दोमत्र्यहं संवत्सरात् दशममहः प्रजायन्ति य एतदुपयन्ति अथ यदातिथ्यया यजन्ते विष्णुमेव तत् देवं देवता यजन्ते, विष्णुर्देवो देवता भवति विष्णोर्देवस्य सायुज्य सलोकतां यन्ति एतदुपयन्ति। अथ यत्प्रवर्ग्यमुपयन्त्यादित्यमेव तत् देव देवता यजन्ते, आदित्यो देवो देवता भवत्यादित्यस्य देवस्य सायुज्य सलोकतां यन्ति य एतदुपयन्ति। अथ यदुपसदमुपयन्ति स्वधामेव तद् देवीं देवता यजन्ते, स्वधा देवी देवता भवति स्वधाया देव्याः सायुज्य सलोकता यन्ति य एतदुपयन्ति। अथ यदौपवसथ्यमहरुपयन्त्यग्नीषोमावेव तत् देवौ देवते यजतेऽग्नीषोमौ देवौ देवते भवतोऽग्नीषोमयोर्देवयोः सायुज्य सलोकतां यन्ति य एतदुपयन्ति। अथ यत् प्रातरनुवाकमुपयन्ति प्रातर्यावाण एव तत् देवा देवता यजन्ते प्रातर्यावाणो, देवा देवता भवन्ति प्रातर्यावणा देवाना सायुज्य सलोकता यन्ति य एतदुपयन्ति। अथ यत् प्रातःसवनमुपयन्ति वसूनेव तत् देवा देवता यजन्ते, वसवो देवा देवता भवन्ति वसूना देवाना सायुज्य सलोकता यन्ति य एतदुपयन्ति। अथ यन्माध्यन्दिन सवनमुपयन्ति रुद्रानेव तत् देवा देवता यजन्ते, रुद्रा देवा देवता भवन्ति रुद्राणा देवाना सायुज्य सलोकता यन्ति य एतदुपयन्ति। अथ यत्तृतीयसवनमुपयन्त्यादित्यानेव तत् देवा देवता यजन्ते, आदित्या देवा देवता भवन्त्यादित्याना देवाना सायुज्य सलो-

गवायुषीपतेर्महाव्रत स्वर्गाल्लोकादुदयनीयमतिरात्र तद्दा एतत् संवत्सरस्य जन्म, स य एवमेतत् संवत्सरस्य जन्म वेद संवत्सरेण स आत्मा सलोको भूत्वा देवमप्येतीति ब्राह्मणम् ॥ ८ ॥

अथ यत् प्रायणीयमतिरात्रमुपयन्त्यहोरात्रावेव तद्देवौ देवते यजतोऽहोरात्रौ देवौ देवते भवतोऽहोरात्रयोर्देवयो सायुज्य सलोकता यन्ति य एतदुपयन्ति। अथ यच्चतुर्विंश-महरुपयन्त्यर्द्धमासानेव तद्देव देवतां यजन्तेऽर्द्धमासा देवा देवता भवन्त्यर्द्धमासाना देवानां सायुज्यं सलोकता यन्ति य एतदुपयन्ति। अथ यदभिप्लवमुपयन्ति ब्रह्माणमेव तत् देवं देवता यजन्ते ब्रह्मा देवो देवता भवति ब्रह्मणो देवस्य सायुज्यं सलोकता यन्ति य एतदुपयन्ति। अथ यत् पृष्ठ्यमुपयन्ति चत्रमेव तत् देव देवता यजन्ते चत्र देवो देवता भवति चत्रस्य देवस्य सायुज्य सलोकता यन्ति य एतदुपयन्ति। अथ यदभिजितमुपयन्त्यग्निमेव तत् देव देवता यजन्तेऽग्निर्देवो देवता भवत्यग्नेर्देवस्य सायुज्य सलोकता यन्ति य एतदुप-यन्ति। अथ यत् स्वरसाम्न उपयन्त्यप एव तत् देवीर्देवता यजन्ते आपो देव्यो देवता भवन्त्यपान्देवीना सायुज्य सलो-कता यन्ति य एतदुपयन्ति। अथ यद्विषुवन्तमुपयन्ति सूर्य्य-मेव तत् देवं देवतां यजन्ते सूर्य्यो देवो देवता भवति सूर्य्यस्य देवस्य सायुज्य सलोकता यन्ति य एतदुपयन्ति। उक्ता आवृत्ता स्वरसामान। अथ यद्विश्वजितमुपयन्तीन्द्रमेव तत् देव देवता यजन्ते इन्द्रो देवो देवता भवतीन्द्रस्य देवस्य सायुज्य सलोकता यन्ति य एतदुपयन्ति। उक्तौ पृष्ठ्याभिप्लवावथ यद् गवायुषी उपयन्ति मित्रावरुणावेव तत् देवौ देवते यजतो मित्रावरुणौ देवौ देवते भवतो मित्रावरुणयोर्देवयोः सायुज्य सलोकता यन्ति य एतदुपयन्ति। अथ यत् दशरात्रमुपयन्ति

लतां यन्ति य एतदुपयन्ति। अथ यदवभृथमुपयन्ति वरुण-मेव तद् देवं देवतां यजन्ते वरुणो देवो देवता भवति वरु-णस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यदुदयनीयया यजन्ते दितिमेव तद् देवीं देवतां यजन्ते दिति र्देवी देवता भवत्यदित्या देव्याः सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यन्मैत्रावरुण्या यजन्ते मित्रावरुणावेव तद् देवौ देवते यजन्ते मित्रावरुणौ देवौ देवते भवतो मित्रावरुण-योर्देवयोः सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यत् त्वाष्ट्रेण पशुना यजन्ते त्वष्टारमेव तद् देवं देवतां यजन्ते त्वष्टा देवो देवता भवति त्वष्टुर्देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद् देविकाहविर्भिश्चरन्ति या एता उपसत्सु संवत्सरि सीमा विष्णुरिति देव्यो देविका देवता भवन्ति देवीनां देविकानां देवतानां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद् व्रतातिरात्रमुपयन्ति काममेव तद् देवं देवतां यजन्ते कामो देवो देवता भवति कामस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यदु-दवसानीयया यजन्ते स्वर्गमेव तं लोकं देवं देवतां यजन्ते स्वर्गो लोको देवो देवता भवति स्वर्गस्य लोकस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। तथा एतदग्निष्टोमस्य जन्म स य एवमेतदग्निष्टोमस्य जन्म वेदाग्निष्टोमेन सर्वं लोकं प्रतितिष्ठति प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद। अग्निष्टोमेन च यात्मा सलोको भूत्वा देवान् अप्येतीति ब्राह्मणम् ॥८॥

अहोरात्राभ्यां वै देवा प्रायणीयमतिरात्रं निरमिमत अर्ध-मासैश्चतुर्विंशमहः ब्रह्मणोऽभिप्लवं क्षत्रात् पृष्ठ्यमग्नेरभि-जितम् अद्भ्यः स्वरसामानः, सूर्याद् विषुवन्तमुक्ता आवृत्ता स्वर-सामान इन्द्राद् विश्वजितमुक्तौ पृष्ठ्याभिप्लवौ मित्रावरुणाभ्यां

गवायुषीपतेर्महाव्रतं स्वर्गाल्लोकादुदयनीयमतिरात्रं तद्वा एतत् संवत्सरस्य जन्म, स य एवमेतत् संवत्सरस्य जन्म वेद संवत्सरेण स आत्मा सलोको भूत्वा देवमप्येतीति ब्राह्मणम् ॥ ८ ॥

अथ यत् प्रायणीयमतिरात्रमुपयन्त्यहोरात्रावेव तद्देवौ देवते यजतोऽहोरात्रौ देवौ देवते भवतोऽहोरात्रयोर्देवयोः सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यच्चतुर्विंश-महरुपयन्त्यर्द्धमासानेव तद्देव देवता यजन्तेऽर्द्धमासा देवा देवता भवन्त्यर्द्धमासानां देवानां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यदभिप्लवमुपयन्ति ब्रह्माणमेव तत् देवं देवता यजन्ते ब्रह्मा देवो देवता भवति ब्रह्मणो देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यत् पृष्ठ्यमुपयन्ति क्षत्रमेव तत् देवं देवता यजन्ते क्षत्रं देवो देवता भवति क्षत्रस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यदभिजितमुपयन्त्यग्निमेव तत् देवं देवता यजन्तेऽग्निर्देवो देवता भवत्यग्नेर्देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यत् स्वरसाम्न उपयन्त्यप एव तत् देवीर्देवता यजन्ते आपो देव्यो देवता भवन्त्यपान्देवीनां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद्विषुवन्तमुपयन्ति सूर्यमेव तत् देवं देवता यजन्ते सूर्यो देवो देवता भवति सूर्यस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। उक्ता आवृत्ता स्वरसामानः। अथ यद्विश्वजितमुपयन्तीन्द्रमेव तत् देवं देवता यजन्ते इन्द्रो देवो देवता भवतीन्द्रस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। उक्तौ पृष्ठ्याभिप्लवावथ यद् गवायुषी उपयन्ति मित्रावरुणावेव तत् देवौ देवते यजतो मित्रावरुणौ देवौ देवते भवतो मित्रावरुणयोर्देवयोः सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यत् दशरात्रमुपयन्ति

विश्वानेव तद् देवान् देवता यजन्ते विश्वेदेवा देवता भवन्ति विश्वेषां देवानां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद् दशरात्रमुपयन्ति दिव एव तद् देवी र्देवता यजन्ते दिव्यो देवो देवता भवन्ति दिव्यान्देवानां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यच्छन्दोमम् उपयन्तीमानेव तल्लोकान् देवान् देवता यजन्त इमे लोका देवा देवता भवन्त्येषां लोकानां देवानां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद् दशममहरुपयन्ति संवत्सर मेव तद् देवं देवतां यजन्ते संवत्सरो देवो देवता भवति संवत्सरस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यन्महाव्रतमुपयन्ति प्रजापतिमेव तद् देवं देवतां यजन्ते प्रजापतिर्देवो देवता भवति प्रजापतेर्देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यदुदयनीयमतिरात्रमुपयन्ति स्वर्गमेव तल्लोकं देवं देवतां यजन्ते स्वर्गो लोको देवो देवता भवति स्वर्गस्य लोकस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति तद् वा एतत्संवत्सरस्य जन्म स य एवमेतत्संवत्सरस्य जन्म वेदायं तत्संवत्सरं स्वर्गे लोके प्रतितिष्ठति प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद संवत्सरस्य स आत्मना सलोको भूत्वा देवाँ अप्येतीति ब्राह्मणम् ॥ १० ॥

स वा एष संवत्सरोऽधिदैवं चाध्यात्मं च प्रतिष्ठितः स य एवमेतत् संवत्सरमधिदैवं चाध्यात्मं च प्रतिष्ठितं वेद प्रति तिष्ठति प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद स वा एष संव त्सरः ॥ ११ ॥

स वा एष संवत्सरो बृहतीमभिसम्पन्नो द्वादशमासाः पञ्चर्त्त वो पञ्चाभिश्चवो नवार्तवो दशरात्रमस्त्वाथ वसु षट्त्रिंशत् सम्प द्यन्ते षट्त्रिंशदक्षरा वै षट्त्रिंशदक्षरा बृहती बार्हतो वै

स्वर्गो लोको बृहत्या वै देवा स्वर्गे लोके यजन्ते बृहत्या' स्वर्गे लोके प्रतिष्ठति प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद स वा एष संवत्सरः ॥ १२ ॥

स वा एष संवत्सरस्त्रिमहाव्रतश्चतुर्विंशेन महाव्रतं विषुवति महाव्रतं महाव्रत एव महाव्रतं तं ह स्मैतमेव विद्वांसः पूर्वे त्रिमहाव्रतमुपयन्ति ते तेजस्विन आसन् सत्यवादिनः संशितव्रता य एनमद्य तथापेयुर्यथाऽऽमपात्रमुदक आसिक्तं निर्मृज्येदेव यजमाना निर्मृज्येरन्नुपर्य्युपयन्ति तथा ह्यस्य सत्येन तपसा व्रतेन चाभिजितमवरुद्धं भवति य एवं वेद स वा एष संवत्सर ॥ १३ ॥

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं महाव्रतमुपेयात् कथमनाकूत्यै भवतीति यमेवामुं पुरस्ताद्विषुवतोऽतिरात्र-मुपयन्ति तेनेति ब्रूयादभिप्लवात् पृष्ठ्यो निर्मितः, पृष्ठ्यादभिजित्, अभिजितः स्वरसामानः, स्वरसामभ्यो विषुवान् विषुवतः स्वरसामानः, स्वरसामभ्यो विश्वजित्, विश्वजितः पृष्ठ्याभिप्लवौ, पृष्ठ्याभिप्लवाभ्यां गवायुषी, गवायुर्भ्यां दशरात्रं, दशरात्राय महाव्रतं, महाव्रतादुदयनीयायातिरात्रायोदयनीयोऽतिरात्रः स्वर्गाय लोकायान्नाद्याय प्रतिष्ठित्यै य एवं वेद स वा एष संवत्सर' ॥ १४ ॥

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं महाव्रतमुपेयात् कथमनाकूत्यै भवतीति यमेवासुं पुरस्ताद्विषुवतोऽतिरात्रमुपयन्ति तेनेति ब्रूयादभिप्लवात् पृष्ठ्यो निर्मितः, पृष्ठ्यादभिजित्, अभिजितः स्वरसामानः, स्वरसामभ्यो विषुवान्, विषुवतः स्वरसामानः, स्वरसामभ्यो विश्वजित्, विश्वजितः पृष्ठ्याभिप्लवौ, पृष्ठ्याभिप्लवाभ्यां गवायुषी, गवायुर्भ्यां दशरात्रोऽथ ह देवेभ्यो महाव्रतं न तस्थे कथमूर्द्ध्वं. स्तोमैर्विषुवन्त-

रूढा अशनापिपासे ते पाप्मानं हत्वा परिप्लवेते एव हैवैते प्रप्लवन्ते ये विद्वांस उपयन्त्यथ ये विद्वांसमुपयन्ति तद्यथा प्रवाहात् प्रवाहं स्थलात् स्थलं समात्समं सुखात् सुखमभयाद-भयमुपसङ्क्रामन्तीत्येवं हैवैते संवत्सरस्योदृचं समश्नुवामहा इति ब्राह्मणम् ॥ २३ ॥

प्रेदिर्ह वै कौशाम्बेयः कौसुरबिन्दुरुद्दालक आरुणौ ब्रह्म-चर्यमुवास तमाचार्यः पप्रच्छ कुमार कति ते पिता संवत्सर-स्याहान्यमन्यतेति कति त्वेवेति दशेति होवाच दश वा इति होवाच दशाक्षरा विराड् वैराजो यज्ञः कति त्वेवेति नवेति होवाच नव वा इति होवाच नव वै प्राणाः प्राणैः यज्ञस्तायते कति त्वेवेत्यष्टेति होवाचाष्ट वा इति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः कति त्वेवेति सप्तेति होवाच सप्त वा इति होवाच सप्त छन्दांसि छन्दोभिर्यज्ञस्तायते कति त्वेवेति षडिति होवाच षड् वा इति होवाच षड् वा ऋतव ऋतूनामाप्त्यै कति त्वेवेति पञ्चेति होवाच पञ्च वा इति होवाच पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः कति त्वेवेति चत्वारीति होवाच चत्वारि वा इति होवाच चत्वारो वै वेदा वेदैर्यज्ञस्तायते कति त्वेवेति त्रीणीति होवाच त्रीणि वा इति होवाच त्रिषवणो वै यज्ञः सवनैर्यज्ञस्तायते कति त्वेवेति द्वे इति होवाच द्वे वा इति होवाच द्विपाद्वै पुरुषो द्विप्रतिष्ठः पुरुषः पुरुषो वै यज्ञः कति त्वेवेत्येकमिति होवाचैकम् वा इति होवाचाहरहरित्येकमेव सर्वं संवत्सरम् ॥ २४ ॥

इति गोपथब्राह्मणपूर्वभागे चतुर्थः प्रपाठकः समाप्तः ।

---

## अथ पञ्चमः प्रपाठकः ।

ओं अभिप्लवः षडहः षडहानि भवन्ति ज्योतिर्गौरायुर्गौ-

अथ हैष महासुपर्णस्तस्य यान् पुरस्ताद्विषुवतः षण्मासानुपयन्ति स दक्षिणः पक्षोऽथ यानावृत्तानुपरिष्टात् षडुपयन्ति स उत्तरः पक्षः आत्मा वै संवत्सरस्य विषुवानङ्गानि पक्षौ यत्र वा आत्मा तत्पक्षौ यत्र वै पक्षौ तदात्मा न वा आत्मा पक्षावतिरिच्येते नो पक्षावात्मानमतिरिच्यन्त इत्येवमु हैव तदपरेषां स्विदितमङ्गा परेषामित्यपरेषां चैव परेषां चेति ब्रूयात्स वा एष संवत्सरः ॥ १८ ॥

तदाहुर्यद् द्वादशमासाः संवत्सरोऽथ हैतदहरवाप्नुयामेति यद्वैषुवतमपरेषा स्विदितमङ्गां परेषामित्यपरेषा चैव परेषा चेति ब्रूयादात्मा वै संवत्सरस्य विषुवानङ्गानि मासौ यत्र वा आत्मा तदङ्गानि यत्राङ्गानि तदात्मा न वा आत्माऽङ्गान्यतिरिच्येते नोऽङ्गान्यात्मानमतिरिच्यन्त इत्येवमु हैव तदपरेषा स्विदितमङ्गां परेषामित्यपरेषा चैव परेषा चेति ब्रूयात्स वा एष संवत्सर' ॥ १९ ॥

तदाहुः कथमुभयतो ज्योतिषोऽभिप्लवा अन्यतरो ज्योतिस्पृष्ट्य इत्युभयतो ज्योतिषो वा इमे लोका अग्निनेता आदित्येनामुत इत्येष ह वा एतेषा ज्योतिर्य एन प्रमृदीव तपति देवचक्रे ह वा एते पृष्ट्य प्रतिष्ठिते पाप्मान ह्वहती परिप्लवेते तस्य एव विदुषा दीक्षितानां पापक कीर्त्तयेदेत एवास्य तद्देवचक्रे शिरश्छन्दतो दशरात्रमुद्धि पृष्ट्याभिप्लवौ चक्रे दशरात्रमुद्धि पृष्ठ्याभिप्लवौ चक्रे तन्व कुर्वीतेति ह स्माह वात्स्युस्तयो स्तोत्राणि च शस्त्राणि च सञ्चारयेद्य. सञ्चारयेत्तस्मादिमे पुरुषे प्राणा नाना सन्त एकोदयाच्छरीरमधिवसति यत्र सञ्चारयेत् प्रमायुको ह यजमान स्यादेष ह वै प्रमायुको योऽन्धो ना वधिरो वा न चाग्निष्टोमा मासि सम्पद्यन्ते न वै प्राणा प्राणैर्यज्ञस्तायत एकविंशतिरुक्थ्या एकोक्थ्य. षोडश्यन्न वा उक्थ्य' वीर्यं षोडशैव तया रुद्वा स्वर्ग लोकमध्यारोहन्ति ॥ २० ॥

अथातोऽह्नामारोहः । प्रायणीयेनातिरात्रेणोदयनीय मतिरात्रमारोहन्ति चतुर्विंशेन महाव्रतमभिप्लवेन परम-भिप्लवं पृष्ठ्येन परं पृष्ठ्यमभिजिताऽभिजितं स्वरसामभि परान् स्वरसाम्नोऽथ वैतदन्तरमाप्नुयामीति यद्विषुवन्तमपरीतो स्विदितमन्नं परीवामितपरीषां च परीषां चेति ब्रूयात्स वा एष संवत्सरः ॥ ११ ॥

अथातोऽह्नामवरोहः । प्रायणीयोऽतिरात्रश्चतुर्विंशायाह्ने निवर्तति चतुर्विंशमवरमभिप्लवाय अभिप्लवः पृष्ठ्याय पृष्ठ्यो ऽभिजिते, अभिजित् स्वरसामभ्यः स्वरसामानो विषुवते विषु वान् स्वरसामभ्यः, स्वरसामानो विश्वजिते, विश्वजित् पृष्ठ्या भिप्लवाभ्यां पृष्ठ्याभिप्लवौ गवायुर्भ्यां गवायुषी दशरात्राय दशरात्रो महाव्रताय महाव्रतमुदयनीयायातिरात्राय उद यनीयोऽतिरात्रः स्वर्गाय लोकायान्नाद्याय प्रतिष्ठित्यै च एवं वेद स वा एष संवत्सरः ॥ १२ ॥

आदित्याश्च ह वा आङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त वयं पूर्वे स्वरेष्यामो वयं पूर्व इति त आदित्या लघुभिः सामभि श्चतुर्भिः स्तोमैर्द्वाभ्यां पृष्ठाभ्यां स्वर्गं लोकमभ्यप्लवन्त, यदभ्य प्लवन्त तस्मादभिप्लवोऽभवत् एवाङ्गिरसो गुरुभिः सामभिः सर्वैः स्तोमैः सर्वैः पृष्ठैः स्वर्गं लोकमभ्यस्पृशन्त यदभ्यस्पृशन्त तस्मात् पृष्ठ्यः स वा एतं स्पर्शं सन्तं पृष्ठ्य इत्याचक्षते परो-क्षेण परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । अभि प्लवात् पृष्ठ्यो निर्मितः, पृष्ठ्यादभिजित्, अभिजितः स्वरसा मानः, स्वरसामभ्यो विषुवान् विषुवतः स्वरसामानः स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्याभिप्लवौ, पृष्ठ्याभिप्लवाभ्यां गवायुषी गवायुर्भ्यां दशरात्रस्तानि वा एतानि यज्ञारण्यानि यज्ञारण्यस्यापि दिवा गतं गतं स्याता अन्तरं तद्यथाऽरण्यम्

रूढा अशनापिपासे ते पाप्मानं हंहती परिप्लवेते एव हैवैते प्रप्लवन्ते ये विद्वांस उपयन्त्यथ ये विद्वांसमुपयन्ति तद्यथा प्रवाहात् प्रवाहं स्थलात् स्थलं समात्समं सुखात् सुखमभयादभयमुपसङ्क्रामन्तीत्येव हैवैते संवत्सरस्योदृच समश्नुवामहा इति ब्राह्मणम् ॥ २३ ॥

प्रेदिहं वै कौशाम्बेयः कौसुरविन्दुरुद्दालक आरुणौ ब्रह्मचर्य्यमुवाच तमाचार्य्यं पप्रच्छ कुमार. कति ते पिता संवत्सरस्याहान्यमन्यथेति कति त्वेवेति दशेति होवाच दश वा इति होवाच दशाक्षरा विराड् वैराजो यज्ञ. कति त्वेवेति नवेति हेवाच नव वा इति होवाच नव वै प्राणाः प्राणै यज्ञस्तायते कति त्वेवेत्यष्टेति होवाचाष्ट वा इति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञ. कति त्वेवेति सप्तेति होवाच सप्त वा इति होवाच सप्त छन्दांसि छन्दोभिर्यज्ञस्तायते कति त्वेवेति षडिति होवाच षड् वा इति होवाच षड् वा ऋतव ऋतूनामाप्त्यै कति त्वेवेति पञ्चेति होवाच पञ्च वा इति होवाच पञ्चपदा पङ्क्ति पाङ्क्तो यज्ञ' कति त्वेवेति चत्वारीति होवाच चत्वारि वा इति होवाच चत्वारो वै वेदा वेदैर्यज्ञस्तायते कति त्वेवेति त्रीणीति होवाच त्रीणि वा इति होवाच त्रिप्रवणो वै यज्ञ सवनैर्यज्ञस्तायते कति त्वेवेति द्वे इति होवाच द्वे वा इति होवाच द्विपाद्वै पुरुषो द्विप्रतिष्ठ पुरुष पुरुषो वै यज्ञ. कति त्वेवेत्येकमिति होवाचैकम् वा इति होवाचाहरहरित्येकमेव सर्वं संवत्सरम् ॥ २४ ॥

इति गोपथब्राह्मणपूर्वभागे चतुर्थ' प्रपाठक समाप्त ।

---

## अथ पञ्चम. प्रपाठकः ।

ओं अभिप्लव षडह षडहानि भवन्ति ज्योतिर्गौरायुर्गौ

पुरुषो वाव संवत्सरस्तस्य पादावेव प्रायणीयोऽतिरात्रः पादाभ्यां हि प्रयन्ति तयोर्यच्छुक्लं तदह्नो रूपं यत् कृष्णं तद्रात्रे नखानि नक्षत्राणां रूपं लोमान्योषधिवनस्पतीनामूरू चतुर्विंशमहरुरोऽभिप्लव पृष्ठं पृष्ठ्य शिर एव त्रिवृत् त्रिवृतं ह्येव शिरो भवति त्वगस्थिमज्जामस्तिष्कं ग्रीवाः पञ्चदशश्चतुर्दश ह्येवैतस्यां कराणि भवन्ति वीर्यं पञ्चदशं तस्मादियमाभिरण्वीभिः सतीभिर्गुरुं भारं हरति तस्माद्ग्रीवाः पञ्चदश उरः सप्तदशोऽष्टावन्ये यत्र वाष्टावन्य उरः सप्तदश तस्मादुरः सप्तदशं उदरमेकविंशो विंशतिर्ह्येवैतस्यान्तर उदरे उत्तापानि भवन्त्युदरमेकविंशं तस्मादुदरमेकविंशं पार्श्वे त्रिणवस्त्रयोदशान्याः पर्शवोऽन्याः पार्श्वे त्रिणवस्तस्मात् पार्श्वे त्रिणवोऽनूकं त्रयस्त्रिंशो द्वात्रिंशतिर्ह्येवैतस्यां पृष्टी कुण्डी उलानि भवन्त्यनूकं त्रयस्त्रिंशं तस्मादनूकं त्रयस्त्रिंशस्तस्यायमेव दक्षिणो बाहुरभिजित्तस्येमे दक्षिणे त्रयः प्राणाः स्वरसामानः आत्मा विषुवांस्तस्येमे सव्ये त्रयः प्राणा अर्वाक् स्वरसामानस्तस्यायं सव्यो बाहुर्विश्वजिदुक्तौ पृष्ठ्याभिप्लवौ यावत्रावौ प्राणौ तौ गवायुषी अङ्गानि दशरात्रो मुखं महाव्रतं तस्य हस्तावेवोदयनीयोऽतिरात्रो हस्ताभ्यां ह्युदयन्ति य एवं वेद स वा एष संवत्सरः॥ ३॥

पुरुषो वाव संवत्सरः, तस्य प्राण एव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति वागारम्भणीयमहर्यद्यदारभते वागारभते वाचैव तदारभते तस्यायमेव दक्षिणः पाणिरभिप्लवस्तस्येदं प्रातःसवनमिदं माध्यन्दिनं सवनमिदं तृतीयं सवनं गायत्र्या आयतने तस्मादियमस्यै कनिष्ठा तस्येदं प्रातःसवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनं त्रिष्टुभ आयतने तस्मादियमस्यै वरिष्ठा तस्येदं प्रातःसवनमिदं माध्यन्दिनं सवनमिदं

तृतीयसवनं जगत्या आयतने तस्मादियमनयोर्वरिष्ठा तस्येदं प्रातःसवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनं पङ्क्त्या आयतने ध्रुवेव वै पङ्क्तिस्तस्मादियमासां प्रतिष्ठा तस्येदं प्रातःसवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनं विराज आयतनेऽन्नं वै श्रीर्विराडन्नाद्यस्य श्रियोऽवरुद्ध्यै तस्मादिय मासां वरिष्ठा तस्येदं प्रातःसवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनमतिच्छन्दसाम् आयतनेऽतिच्छन्दो वै छन्दसामायतनं तस्मादिदं प्रतिष्ठं एकधा तस्येदं प्रातःसवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनं श्वेत श्वेतोऽसि ध्रुव एत आत्मा प्रज्ञा प्रयतीवाभिमुखपिष्ठतीव प्रज्ञा ध्रुवत इव श्वेतमश्नैक्षितृतीयामना तस्मादयमेव दक्षिणः कर्णोऽभि चित् तस्य यद् दक्षिणमक्ष्यां स प्रथमस्वरस्यामा यत् सव्यं स द्वितीयो यच्चक्षुर्दं स तृतीयो नासिके विद्वान् मध्यममिव प्रथमोऽस्वरोऽष्य स्वरस्यामा यत् सव्यं स द्वितीयो यत् मध्ये स तृतीयस्तस्मायं सव्यः कर्णो विश्वविद्वान् पश्यामि ध्रुवो वाचयाचो माचो ती यथाञ्जुरी पश्यामि दक्षपाचो सुखं मध्यामत तस्योदाग एकोदयनीयोऽतिरात्र उदानेन सुपश्चि य एवं वेद स वा एष संवत्सरः ॥ १ ॥

पुरुषो वाव संवत्सरः पुरुष एवैकं संवत्सरमित्येव एकस्य तत्समं द्वे अहोरात्रे संवत्सरस्य द्वाविमौ पुरुषे प्राणा एकस्य तत्समं त्रयो वा ऋतवः संवत्सरस्य त्रय इमे पुरुषे प्राणा एकस्य तत्समं पञ्च वा ऋतवः संवत्सरस्य पञ्चेमे पुरुषे प्राणा एकस्य तत्समं सप्त वा ऋतवः संवत्सरस्य सप्तेमे पुरुषे प्राणा-एकस्य तत्समं, द्वादश मासाः संवत्सरस्य द्वादशेमे पुरुषे प्राणा एकस्य तत्समं त्रयोदश मासाः संवत्सरस्य त्रयोदशेमे पुरुषे प्राणा एकस्य तत्समं, चतुर्विंशतिरर्धमासाः संवत्सरस्य चतु

विंशोऽयं पुरुषो विंशत्यङ्गुलिश्चतुरङ्ग इत्यत्र तत्समं, षड्विंशति-र्द्धमासाः संवत्सरस्य षड्विंशोऽयं पुरुषः प्रतिष्ठे षड्विंशे इत्यत्र तत्समं, त्रीणि च ह वै शतानि षष्टिश्च संवत्सर-स्याहोरात्राणीत्येतावन्त एव पुरुषस्य प्राणा इत्यत्र तत्समं, सप्त च ह वै शतानि विंशतिश्च संवत्सरस्याहानि च रात्रयश्चेत्ये-तावन्त एव पुरुषस्यास्थीनि च मज्जानश्चेत्यत्र तत्समं, चतु-र्दश च ह वै शतानि चत्वारिंशच्च संवत्सरस्यार्द्धाहाश्चार्द्ध-रात्रयश्चेत्येतावन्त एव पुरुषस्य स्थुरामांसानीत्यत्र तत् सम-मष्टाविंशतिश्च ह वै शतान्यशीतिश्च संवत्सरस्य पादाहाश्च पादरात्रयश्चेत्येतावन्त एव पुरुषस्य स्नावा बन्ध्या इत्यत्र तत्समं, दश च ह वै सहस्राण्यष्टौ च शतानि संवत्सरस्य मुहूर्त्ताः इत्येत्यवन्त एव पुरुषस्य पेशभमरा इत्यत्र तत्समं, यावन्तो मुहूर्त्ताः पञ्चदशकृत्वस्तावन्तः प्राणा यावन्तः प्राणाः पञ्चदशकृत्वस्तावन्तोऽपानाः यावन्तोऽपानाः पञ्चदशकृत्वस्ता-वन्तो व्यानाः यावन्तो व्यानाः पञ्चदशकृत्वस्तावन्तः समानाः यावन्तः समानाः पञ्चदशकृत्वस्तावन्त उदाना यावन्त उदानाः पञ्चदशकृत्वस्तावन्त्येतादीनि यावन्त्येतादीनि तावन्त्येतर्हीणि यावन्त्येतर्हीणि तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्ति क्षिप्रायणानि यावन्ति क्षिप्रायणानि तावन्तो रोमकूपाः यावन्तो रोमकूपाः पञ्चदशकृत्वस्तावत्यो वर्षतो धारास्तदेतत् क्रोशशतिकम्परिमाणम् ।

तदप्येतदृचोक्तम् । अप्रमादन्यत्र परिवर्त्तमानश्चरन्नासीनो यदि वा स्वपन्नपि । अहोरात्राभ्यां पुरुषः क्षणेन कतिकृत्वः प्राणति चापानति च । शतं शतानि परिवत्सराणामष्टौ च शतानि मुहूर्त्तान् यान् वदन्ति अहोरात्राभ्यां पुरुषः समेन कतिकृत्वः प्राणति चापानति चेति ब्राह्मणम् ॥ ५ ॥

संवत्सरस्य समता वेदितव्येति ह यथा ह वा स्थूरैकमेव पुरस्ताद् विषुवतोऽतिरात्रमुपयन्त्येवमुपरिष्टात्त्रिपञ्चाशतमेव पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति त्रिपञ्चाशतमुपरिष्टाद् विंशतिशतमेव पुरस्ताद्विषुवत उक्थ्यानुपयन्ति विंशतिशतमुपरिष्टाद् षडेव पुरस्ताद्विषुवतः षोडशिन उपयन्ति षडुपरिष्टाद् त्रिंशदेव पुरस्ताद्विषुवतः षडहानुपयन्ति त्रिंशदुपरिष्टात् सा वा संवत्सरस्य समता स य एवमेतां संवत्सरस्य समतां वेद संवत्सरेण स आत्मना सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ॥६॥

पर्याणि यज्ञकर्माणि । अग्न्याधेयमग्न्याधेयात् पूर्णाहुतिः पूर्णाहुतेरग्निहोत्रमग्निहोत्राद्दर्शपूर्णमासौ दर्शपूर्णमासाभ्यामाग्रयणमाग्रयणाच्चातुर्मास्यानि चातुर्मास्येभ्यः पशुबन्धः पशुबन्धादग्निष्टोमोऽग्निष्टोमाद्राजसूयो राजसूयाद्वाजपेयः वाजपेयादश्वमेधः अश्वमेधात्पुरुषमेधः पुरुषमेधात् सर्वमेधः सर्वमेधाद्दक्षिणावन्तो दक्षिणावद्भ्यो दक्षिणा अदक्षिणाः सहस्रदक्षिणे प्रत्यतिष्ठन् ते वा एते यज्ञक्रमाः । स य एवमेतान् यज्ञक्रमान्वेद यज्ञेन स आत्मना सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ॥ ७ ॥

प्रजापतिरकामयतानन्त्यमश्नुवीयेति सोऽग्नीनाधाय पूर्णां हुत्वा यजेत सोऽन्तमेवापश्यत् सोऽग्निहोत्रेणेष्ट्वाऽन्तमेवापश्यत् स दर्शपूर्णमासाभ्यामिष्ट्वाऽन्तमेवापश्यत् स आग्रयणेनेष्ट्वाऽन्तमेवापश्यत् स चातुर्मास्यैरिष्ट्वाऽन्तमेवापश्यत् स पशुबन्धेनेष्ट्वाऽन्तमेवापश्यत् सोऽग्निष्टोमेनेष्ट्वाऽन्तमेवापश्यत् स राजसूयेनेष्ट्वा राडिति नामाधत्त सोऽन्तमेवापश्यत् स वाजपेयेनेष्ट्वा सम्राडिति नामाधत्त सोऽन्तमेवापश्यत् सोऽश्वमेधेनेष्ट्वा स्वराडिति नामाधत्त सोऽन्तमेवापश्यत् स पुरुषमेधेनेष्ट्वा विराडिति नामाधत्त सोऽन्तमेवापश्यत् स सर्वमेधेनेष्ट्वा सर्वराडिति नामा

त्त सोऽन्तमेवापश्यत् सोऽहीनैर्दक्षिणावद्भिरिष्ट्वाऽन्तमेवा-
पश्यत् सोऽहीनैरदक्षिणावद्भिरिष्ट्वाऽन्तमेवापश्यत् स सर्वेणो-
नयतोऽतिरात्रेणान्तलो यजेत वाच ह वै होत्रे प्रायच्छत्
प्राणमध्वर्य्यवे चक्षुरुद्गात्रे मनो ब्रह्मणेऽङ्गानि होत्रकेभ्य
आत्मानं सदस्येभ्य एवमानन्त्यमात्मानं दत्वानन्त्यमश्नुयेति
तद्या दक्षिणा अनयत्ताभिरात्मानं निष्क्रीणीय तस्मादेतेन
ज्योतिष्टोमेनाग्निष्टोमेनात्मनिष्क्रयणेन सहस्रदक्षिणेन पृष्ठ-
शमनीयेन त्वरेत यो ह्यनिष्ट्वा पृष्ठशमनीयेन प्रेत्यात्मानं सो
निष्क्रीणीय प्रेतीति ब्राह्मणम् ॥ ८ ॥

यद्दै संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषामग्निहोत्र-
मनन्तरितं भवति व्रतेनेति ब्रूयात्, कथमेषां दर्शोऽनन्तरितो
भवति दध्ना च पुरोडाशेन चेति ब्रूयात्, कथमेषां पौर्णमास-
मनन्तरितं भवति आज्येन च पुरोडाशेन चेति ब्रूयात्, कथ-
मेषामाग्रयणमनन्तरितं भवति सौम्येन चरुणेति ब्रूयात् कथ-
मेषां चातुर्मास्यान्यनन्तरितानि भवन्ति पयसेति ब्रूयात्,
कथमेषां पशुबन्धोऽनन्तरितो भवति पशुना च पुरोडाशेन
चेति ब्रूयात्, कथमेषां सौम्योऽध्वरोऽनन्तरितो भवति ग्रहै-
रिति ब्रूयात्, कथमेषां गृहमेधोऽनन्तरितो भवति धानाक-
रम्भैरिति ब्रूयात्, कथमेषां पितृयज्ञोऽनन्तरितो भवत्यौपासनै-
रिति ब्रूयात्, कथमेषां मिथुनमनन्तरितं भवति हिङ्कारेणेति
ब्रूयात् सैषा संवत्सरे यज्ञक्रतूनामुपैति स य एवमेतां संवत्सरे
यज्ञक्रतूनामुपैति वेद यज्ञेन स आत्मा स लोको भूत्वा देवाए
अप्येतीति ब्राह्मणम् ॥ ९ ॥

देवा ह वै सहस्रसंवत्सराय दिदीक्षिरे, तेषां पञ्चशतानि
संवत्सराणां पर्युपेतान्यासन्नथेदं सर्वं शश्रमुर्ये स्तोमा यानि
पृष्ठानि यानि शस्त्राणि ते देवा इह त्वामिवासुरप तं यज्ञ-

स्याग्नस्यमपश्यस्ते ह्येव स्तोमा भवन्ति तानि पृष्ठानि तानि शस्त्राणि ते देवा इह सामिवासुरुप त यज्ञक्रतु जानीमो य' सहस्रसंवत्सरेण प्रतिमा को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण यजेतेति तत एत विश्वजित पृष्ठं षडहस्याग्नस्यमपश्यस्ते ह्येव स्तोमा भवन्ति तानि पृष्ठानि तानि शस्त्राणि ते देवा इह सामिवासुरुप त यज्ञक्रतु जानीमो य' सहस्रसंवत्सरस्य प्रतिमा को हि तस्मै मनुष्यो य' सहस्रसंवत्सरेण यजेतेति स वा एष विश्वजिद् य सहस्रसंवत्सरस्य प्रतिमैष ह प्रजाना 'प्रजापतिर्यद्विश्वजिदिति ब्राह्मणम् ॥ १० ॥

पुरुष ह वै नारायण प्रजापतिरुवाच यजस्व यजस्वेति सहोवाच यजस्व यजस्वेत्येव ह्यात्थमाविरयच्चतेमे वसवः प्रात-सवनेनागू रुद्रा माध्यन्दिने सवन आदित्यास्तृतीयसवने यज्ञवास्तुन्येव पर्य्यशिषो यज्ञवास्तुमित्येवमाशिषोऽह वा एतद्वेद यज्ञे वसव' प्रात'सवनेनागू रुद्रा माध्यन्दिने सवन आदित्यास्तृतीयसवने यज्ञवास्तुन्येव पर्य्यशिषो यज्ञवास्तुमित्येवमाशिषो विद्वासो नून त्वा याजयेयुरेते ह वा अविद्वासो यत्रानृग्विद् होता भवत्ययजुर्विदध्वर्युरसामविदुद्गाता भृग्वङ्गिरोविदब्रह्मा यजस्वैव हन्त तु ते तद्वक्ष्यामि यथा सूत्रे मणिरिव सूत्रमेतान्यक्थाहानि भवन्ति सूत्रमिव वा मणाविति तस्माद्य एव सर्वविस्यात् त ब्रह्माण कुर्वीतैष ह वै विद्वान् सर्वविद्ब्रह्मा यद्भृग्वङ्गिरोविदेते ह वा अस्य सर्वस्य शमयितार' पालयितारस्तस्माद्ब्रह्मा स्तुते वह्नि पवमाने वाचयति ॥ ११ ॥

श्येनोऽसि गायत्रच्छन्दा अनुत्वारभे स्वस्ति सम्पारयेति स यदाह श्येनोऽसीति सोम वा एतदाहैष ह वा अग्निर्भूत्वा-

ऽस्मिँल्लोके संस्थापयति तथासंस्थापयति तस्माच्चैं गच्छन्त्ये नत्र ममेतं स यदाह गायत्रच्छन्दा अनु त्वारभ इति गायत्रेण च्छन्दसा वसुभिर्देवैः प्रातःसवनेऽस्मिँल्लोकेऽग्निं सन्तमन्वारभते स यदाह स्वस्ति मा सम्पारयेति गायत्रेणैव च्छन्दसा वसुभिर्देवैः प्रातःसवनेऽस्मिँल्लोकेऽग्निना देवेन स्वस्ति सम्पारयेति गायत्रेणैवैनन्तच्छन्दसा वसुभिर्देवैः प्रातःसवनेऽस्मिँल्लोकेऽग्निना देवेन स्वस्ति सम्पारयति य एवं वेद ॥ ११ ॥

अथ माध्यन्दिने पवमाने वाचयति सम्राडसि त्रिष्टुप् छन्दा अनु त्वारभे स्वस्ति मा सम्पारयेति स यदाह सम्राडसीति सोमं वा एतदाहैष ह वै वायुर्भूत्वान्तरिक्षलोके सम्राजति तद्यत् सम्राजति तस्मात्सम्राट् तत् सम्राजः सम्राट्त्वं स यदाह त्रिष्टुप्छन्दा अनु त्वारभ इति त्रैष्टुभेन छन्दसा रुद्रैर्देवैर्माध्यन्दिने सवनेऽन्तरिक्षे लोके वायुं सन्तमन्वारभते स यदाह स्वस्ति मा सम्पारयेति त्रैष्टुभेनैव च्छन्दसा रुद्रैर्देवैर्माध्यन्दिने सवनेऽन्तरिक्षलोके वायुना देवेन स्वस्ति मा सम्पारयेति त्रैष्टुभेनैवैनं तच्छन्दसा रुद्रैर्देवैर्माध्यन्दिने सवनेऽन्तरिक्षलोके वायुना देवेन स्वस्ति सम्पारयति य एवं वेद ॥ १२ ॥

आर्भवे पवमाने वाचयति स्वरोऽसि गयोऽसि जगच्छन्दा अनु त्वारभे स्वस्ति मा सम्पारयेति स यदाह स्वरोऽसीति सोमं वा एतदाहैष ह वै सूर्यो भूत्वाऽमुष्मिँल्लोके स्वरति तद्यत् स्वरति तस्मात् स्वरस्तत् स्वरस्य स्वरत्वं स यदाह गयोऽसीति सोमं वा एतदाहैष ह वै चन्द्रमा भूत्वा सर्वान् लोकान् गच्छति तद् यद् गच्छति तस्माद्गयस्तद्गयस्य गयत्वं स यदाह जगच्छन्दा अनु त्वारभ इति जागतेन च्छन्दसाऽऽदित्यैर्देवैस्तृतीयसवनेऽमुष्मिँल्लोके सूर्यं सन्तमन्वारभते स यदाह स्वस्ति मा सम्पा

रयेति जागतेनैव च्छन्दसाऽऽदित्यैर्देवैस्तृतीयसवनेऽमुष्मिं लोके सूर्य्येण देवेन स्वस्ति सम्पारयेति जागतेनैवैनन्तच्छन्दसाऽऽदित्यैर्देवैस्तृतीयसवनेऽमुष्मिं लोके सूर्य्येण देवेन स्वस्ति सम्पयते य एव वेद ॥ १४ ॥

अथ संस्थिते संस्थिते सवने वाचयति मयि भर्गो मयि महो मयि यशो मयि सर्वमिति पृथिव्येव भर्गोऽन्तरिक्ष एव महो द्यौरेव यशोऽप एव सर्वमग्निरेव भर्गो वायुरेव मह आदित्य एव यशश्चन्द्रमा एव सर्वं वसव एव भर्गो रुद्रा एव मह आदित्या एव यशो विश्वेदेवा एव सर्वं गायत्र्येव भर्गस्त्रिष्टुवेव महो जगत्येव यशोऽनुष्टुवेव सर्वं प्राच्येव भर्गः प्रतीच्येव मह उदीच्येव यशो दक्षिणेव सर्वं वसन्त एव भर्गो ग्रीष्म एव महो वर्षा एव यशः शरदेव सर्वं त्रिवृदेव भर्गः पञ्चदश एव महः सप्तदश एव यश एकविंश एव सर्वमृग्वेद एव भर्गो यजुर्वेद एव महः सामवेद एव यशो ब्रह्मवेद एव सर्वं होतैव भर्गोऽध्वर्युरेव मह उद्गातैव यशो ब्रह्मैव सर्वं वागेव भर्गः प्राण एव महश्चक्षुरेव यशो मन एव सर्वम् ॥ १५ ॥

स यदाह मयि भर्ग इति पृथिवीमेवैत लोकानामाहाग्निं देवानां वसून् देवां देवगणानां गायत्रं छन्दसां प्राचीन्दिशां वसन्तमृतूनां त्रिवृतं स्तोमानामृग्वेदं वेदानां हौत्रं होत्रकाणां वाचमिन्द्रियाणाम् ॥ १६ ॥

स यदाह मयि मह इत्यन्तरिक्षमेवैतल्लोकानामाह वायुं देवानां रुद्रां देवां देवगणानांस्त्रैष्टुभं छन्दसां प्रतीचीन्दिशां ग्रीष्ममृतूनां पञ्चदशं स्तोमानां यजुर्वेदं वेदानामाध्वर्यवं होत्रकाणां प्राणमिन्द्रियाणाम् ॥ १७ ॥

स यदाह मयि यश इति दिवमेवैतल्लोकानामाहादित्यं देवानामादित्यां देवां देवगणानां जागतं छन्दसामुदीचीन्दिशां

सन्युप्याग्नींस्ते न यजेरंस्ते समानधिष्ण्या एव स्युरोदवसानीया या उदवसानीया यां विन्युप्याग्नीं स्तया यजेरस्ते नानाधिष्ण्या एव स्युरथ यदि यजमानस्योपतयेत् पार्श्वतोऽग्नीनाधाय ताव-दासीत यावदगदः स्याद्यदि प्रेयात्स्वैरेव तमग्निभिर्दहेद् दग्ध वा अग्निभिरितरे यजमाना आसत इति वदन्तस्तस्य तदेव ब्राह्मण यददः पुर सवने पितृमेध आशिषो व्याख्याता ॥२२॥

साय प्रातर्होमौ स्थालीपाको नवश्च यः। बलिश्च पितृ-यज्ञश्चाष्टका सप्तम पशुरित्येते पाकयज्ञा । अग्न्याधेयमग्नि-होत्र पौर्णमास्यमावास्ये । नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तम इत्येते हविर्यज्ञाः। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्य षोडशिमांस्तत । वाजपेयोऽतिरात्रश्चाप्तोर्यामात्र सप्तम इत्येते सुत्या । केस्विद्देवाः प्रवीवाजा केस्विद्देवा अभिद्यव.। केस्विद्देवा हविष्मन्तः किस्विज्जिगाति सुम्नयु । ऋतव एव प्रवीवाजा मासा देवा अभिद्यवः। अर्द्धमासा हविष्मन्तस्त-ज्जिगाति सुम्नयु । कतिस्विद्रात्रय. कत्यहानि कति स्तोत्राणि कतिशस्त्राण्यस्य। कतिचित्सवना संवत्सरस्य स्तोत्रिया पदाक्षराणि कत्यस्य। द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वेवि-शतिशते उक्थ्यानाम्। द्वादशषोडशिन षष्टिः षडहा वैषु-वतश्च। अहान्यस्य विंशतिशतानि त्रीण्यहश्चैक तावदस्य। सवत्सरस्य सवनाः सहस्रमशीति त्रीणि च सस्तुतस्य। षट्-षष्टिश्च द्वे च शते च भवत स्तोत्र शस्त्राणामयुतं चैकमस्य। स्तोत्रियाश्च नवतिसहस्रा द्वे नियुते नवतिश्चातिषट् च। अष्टौ शतान्ययुतानि त्रिंशच्चतुर्नवतिश्च पदान्यस्य। सवत्सरस्य कविभिर्मितस्यैतावती मध्यमा देवमात्रा। अयुतमेक प्रयु-तानि त्रिंशद् द्वे नियुते तथा ह्यनुष्टुप्टा । अष्टौ शतानि नव चाक्षराण्येतावानात्मा परमः प्रजापतेः। आद्य वषट्कार.

ब्राह्मणाच्छंसिन. सह पोताऽऽग्नीध्रो निहितं पादमेकम्। अथर्वभिरङ्गिरोभिश्च गुप्तोऽप्सु चन्द्र पाद ब्रह्मणा धारयन्ति। षोडशिक होत्रका अभिष्टुवन्ति वेदेषु युक्ताश्च पृथक् चतुर्धा। मनीषिणो दीक्षिता श्रद्दधाना होतारो गुप्ता अभिवहन्ति॥ यज्ञम्। दक्षिणतो ब्रह्मणस्था जनदित्येता व्याहृति जपन्। सप्तदश सदस्य त कीर्त्तियन्ति पुरा विदु। अष्टादशी दीक्षती दीक्षिताना यज्ञे पत्नी श्रद्दधानेह युक्ता। एकोनविंश. शमिता बभूव विंशो यज्ञे गृहपतिर्व सुन्वन्। एकविंशतिरेवैषां सस्थायामङ्गिरो. वह। वेदैरभिष्टुतो लोको नानाविंशापराजित ॥ २४ ॥

सप्त सुत्या सप्त च पाकयज्ञा हविर्यज्ञाः सप्त तथैकविंशति। सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति नूतना यानृषयो सृजन्ति ये च सृष्टा पुराणैः। एतेषु वेदेष्वपि चैकमेवापव्रजमृत्विजा सम्भरन्ति। कूटस्तूपात् सचते तामग्रस्त विस्कम्भमेन विष्टत प्रजासु। निवर्त्तन्ते दक्षिणा नीयमाना. सुते सोमे वितते यज्ञतन्त्रे। मोघाशिषो यन्त्यनिवर्त्तमाना अनिष्टयज्ञा न तरन्ति लोकान्। द्वादशवर्षं ब्रह्मचर्यं पृथग्वेदेषु तत् स्मृतम्। एव व्यवस्थिता वेदाः सर्व एव स्वकर्मसु। सन्ति चैषा समाना मन्त्रा. कल्पाश्च ब्राह्मणानि च। व्यवस्थानन्तु तत्सर्व पृथग्वेदेषु तत् स्मृतम्। ऋग्वेदस्य पृथिवी स्थानमन्तरिक्षस्थानो अध्वर। द्यौ स्थान सामवेदस्यापो भृग्वङ्गिरसा स्मृतम्। अग्निर्देवत ऋग्वेदस्य यजुर्वेदो वायुर्देवत। आदित्य सामवेदस्य चन्द्रमा वैद्युतश्च भृग्वङ्गिरसाम्। त्रिवृत् स्तोम ऋग्वेदस्य यजूंषि पञ्चदशेन सह जज्ञिरे। सप्तदशेन सामवेद एकविंशो ब्रह्मसम्मित। वागध्यात्ममृग्वेदस्य यजुषा प्राण उच्यते। चक्षुषी सामवेदस्य मनो भृग्वङ्गिरसा स्मृतम्।

तासु प्रणीयमानासु वाचं यच्छत्या हविष्कृत उद्वादना-देतद्वै यज्ञस्य द्वारं तदेतदशून्यं करोतीष्टे च स्विष्टकृत्यानुयाजानां प्रसवादित्येतद्वै यज्ञस्य द्वितीयं द्वारं तदेवैतदशून्यं करोति यत् परिधयः परिधीयन्ते यज्ञस्य गोपीथाय परिधीन् परिधत्ते यज्ञस्य सात्मत्वाय परिधीन् समार्ष्टि पुनात्येवैनं त्रिर्मध्यमं त्रय इमे प्राणाः प्राणानेवाभिजयति त्रिर्दक्षिणार्द्धं त्रयो वै लोका लोकानेवाभिजयति त्रिरुत्तरार्द्धं त्रयो वै देवलोका देवलोकानेवाभिजयति त्रिरुप वा जयति त्रयो वै देवयानाः पन्थानस्तानेवाभिजयति ते वै द्वादश भवन्ति द्वादश ह वै मासाः संवत्सरः संवत्सरमेव तेन प्रीणात्यथो संवत्सरमेवात्मा उपदधाति स्वर्गस्य लोकस्य समष्ट्यै ॥ १ ॥

प्रजापतिर्वै रुद्रं यज्ञान्निरभजत् सोऽकामयत मेऽयमस्मा आकूतिं समृद्धिर्यो मा यज्ञान्निरभाक्षीदिति। स यज्ञमभ्यायम्याविध्यत् तदाविद्धं निरकृन्तत् तत् प्राशित्रमभवत्तदुदयच्छत्तद्भगाय पर्यहरस्तत्प्रतीक्षेत। तस्य चक्षुः परापतत् तस्मादाहुरन्धो वै भग इत्यपिहत नेच्छेद्यमिच्छति तत् सवित्रे पर्यहरस्तत् प्रत्यगृह्णात् तस्य पाणी प्रतिच्छेद तस्मै हिरण्मयौ प्रत्यदधुस्तस्माद्धिरण्यपाणिरिति स्तुतस्तत्पूष्णे पर्यहरस्तत् प्राश्नात्तस्य दन्ताः परोऽप्यन्त तस्मादाहुरदन्तकः पूषा पिष्टभाजन इति तद्विष्णवायाङ्गिरसाय पर्यहरस्तत् प्राश्नातस्य शिरो व्यपतत् तं यज्ञ एवाकल्पयत् स एष इध्मः समिधो ह पुरातनस्तद्दहंय आङ्गिरसाय पर्यहरस्तत्प्राश्नात्तस्याङ्गा पर्वाणि व्यस्रंसन्त तं यज्ञ एवाकल्पयत्तदेतद्बर्हिः प्रस्तरो ह पुरातनस्तद्बृहस्पतय आङ्गिरसाय पर्यहरत् सोऽबिभेत् बृहस्पतिरित्थं वा मार्त्तिमार्च्छ्यसीति स

एतं मन्त्रमपश्यत् सूर्यस्य त्वा चक्षुषा प्रतीक्ष इत्यब्रवीन्न हि सूर्यस्य चक्षुः किंचन हिनस्ति सोऽबिभेत् प्रतिगृहीतं मा हिंसिष्यतीति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा प्रतिगृह्णामीत्यब्रवीत्सवितृप्रसूत एवैनं तद्देवताभिः प्रत्यगृह्णात्पूर्वम् यथाग्नि मान्स्त्वं व्यथिष्ठे लिरभाति पृथिव्यास्त्वा नाभौ सादयामीति पृथिवी वा अन्नानां शमयित्री तयैवैतच्छमयाञ्चकार सोऽबिभेत्प्राशितं मा हिंसिष्यतीत्यग्नेस्त्वास्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किंचन हिनस्ति सोऽबिभेत्प्राशितं मा हिंसिष्यतीतीन्द्रस्य त्वा जठरे सादयामीत्यब्रवीदिन्द्रस्य जठरं किंचन हिनस्ति ब्रह्मण उदर इति न हि ब्रह्मण उदरं किंचन हिनस्तीति ॥ २ ॥

अथो खल्वाहुर्ब्रह्मण उदरं ब्रह्माणाऽस्यमग्नेराऽऽस्यमिति मा हिंसीः प्राशितं वै सर्वेषां भूतानामात्मा तेनैवैतच्छमयाञ्चकार प्राशित्रमनुमन्त्रयते । योऽस्मिन्नुमना नाम ब्राह्मणेषु प्रविष्टः तस्मिन् म एतत् सुहुतमस्तु प्राशित्रं तन्मा मा हिंसीत् परमे व्योमन्निति तद्यदेव ब्रह्मा प्राश्नात्यत एवं मा हिनस्तु वायो प्रविष्टः प्राशं प्रजायै कुर्वीत ब्रह्मणस्तिर्थं सर्वं ब्रह्म सर्वेण ह वा एतद् ब्रह्मणा यज्ञं दक्षिणत उपास्यतेऽथ यद् वा एतस्मात् प्राणा आमन्ति च भाषित प्राकाशयिमर्भेक- विस्त्वा प्राणान् संस्पृशति वाच प्राणं नित्यभूतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुपाह्वयते तद् वैव ताडु रिन्द्राय पर्यहरन्निति ते देवा बाहुबलिष्ठो वै देवानामोजिष्ठो बलिष्ठस्तस्मा एतत्परिहरन्तीति तस्मै पर्यहरंस्तदिद ब्रह्मणा शमयाञ्चकार तस्मादाहुरिन्द्रो ब्रह्मेति यजमानं भवति सर्व मायुरेति य एवं विद्वान् न हिनस्ति यदधस्तादभिधारयति तथा

दधस्तात् प्रचरण प्रजा अरुर्नं हिनस्ति यदुपरिष्टादभिधारयति तस्मादुपरिष्टात् प्रचरण प्रजा अरुर्नं हिनस्ति यदुभयतोऽभिधारयत्युभयतोऽभिधारि प्रजा अरुर्घातुक स्याद्यच्छमयाभिहरेदनभिविद्ध यज्ञस्याभिविद्येत् ॥ ३ ॥

अग्रेण परिहरति तीर्थेनैव परिहरति वै वा एतद्यज्ञश्छिद्यते यत् प्राशित्रं परिहरति यदाह ब्रह्मन् प्रस्थास्यामीति बृहस्पतिर्वै सर्वं ब्रह्म सर्वेण ह वा एतद् ब्रह्मणा यज्ञ दक्षिणतः सन्दधात्यथोऽत्र वा एतर्हि यज्ञः श्रितो यत्र ब्रह्मा तत्रैव यज्ञः श्रितस्तत एवैनमालभते यद्धस्तेन प्रमीयेद्वेपनस्याद्यच्छीर्ष्णा शीर्षक्तिमान्स्याद्यत्तूष्णीमासीतासम्प्रत्तो यज्ञ स्यात् प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्र ब्रह्मा तत्रैव यज्ञः श्रितस्तत एवैन सम्प्रयच्छत्याग्नीध्र आदधात्यग्निमुखानेवर्तून् प्रीणात्यथोत्तरासामाहुतीना प्रतिष्ठित्याऽथो समिद्वत्येव जुहोति परिधींत्सम्मार्ष्टि पुनात्येवैना सकृत् सकृत् सम्मार्ष्टि पराडेव ह्येतर्हि यज्ञस्तु सम्पद्यतेऽथो चतुष्पाद पशवः पशूनामाप्त्यै देव सवितरेतत्ते प्राहेत्याह प्रसूत्यै बृहस्पतिः ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपति पाहि स माम्पाहि स मा पाहि स मा कर्मण्यं पाहीत्याह यज्ञाय च यजमानाय च पशूनामाप्त्यै ॥ ४ ॥

न वै पौर्णमास्या नामावास्याया दक्षिणा दीयन्ते य एष ओदन पच्यते दक्षिणैषा दीयते यज्ञस्यर्ध्या इष्टी वा एतेन यद्यजतेऽथो वा एतेन पूर्त्ती य एष ओदन पच्यत एष ह वा इष्टापूर्त्ती य एन पचति ॥ ५ ॥

द्वया वै देवा यजमानस्य गृहमागच्छन्ति सोमपा अन्येऽसोमपा अन्ये हुतादोऽन्ये ऽहुतादोऽन्य एते वै देवा अहुतादो यद् ब्राह्मणा एतद् वत्व ऋषयः पुरानीजान एते ह वा एतस्य प्रजायाः

पशूनामीमहे तेऽस्माभीता रूपमूर्जमादायापक्रामन्ति यद् ब्राह्मणमन्वाहरति तामेव तेन प्रीणाति दक्षिणत उद्ग परिवर्त्याह दक्षिणावृतैव यज्ञेन यजत आवृतिमिरेव देवान् हुताद प्रीणाति दक्षिणाभिर्मनुष्यदेवांस्तेऽस्मै प्रीता रूपमूर्जं नियच्छन्ति ॥ ६ ॥

देवाश्च ह वा असुराश्चास्पर्धन्त ते देवाः प्रजापतिमेवाभ्यजयन्त यज्ञोऽन्यत्रासन्नसुरा यज्ञमसृजन्त देवा एतमोदनम् पक्त्वा प्रजापतये भागमनुनिरवपन् तमेव यज्ञम् प्रजापतिर्देवानुपावर्तत ततो देवा अभवन् परासुरा स य एवं विद्वानेतमोदनं पचति भवत्यात्मना परास्याप्रियो भ्रातृव्यो भवति प्रजापतिर्देवेभ्यो भागधेयानि व्यकल्पयत् सोऽमन्यत आत्मानमन्तरगादिति स एत मोदनमभजमपश्यत्तमात्मने भाग निरवपत् प्रजापतेर्वा एष भागो अपरिमित अपरिमितो हि प्रजापतिः प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वानक्षितोऽस्य क्षित्यै त्वा मा मे क्षेष्ठा । अमुत्रामुष्मिँल्लोक इह च प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मे धेह्यक्षितोऽसि मे मा क्षेष्ठा । इत्यतो मे मोपदस प्रजापति मदन्नया समृद्धया समिति प्रजापतिमेव समवाप्नोति य एवं वेद य एवं वेद ॥ ७ ॥

ये वा इह यज्ञैरार्ध्नुवंस्तेषामेतानि ज्योतींषि यान्यमूनि नक्षत्राणि तद्यथामूनि नक्षत्राणि यत्र चियन्ति दर्शपूर्णमासौ वै यज्ञस्यावसानदर्शौ ये वा अनिष्ट्वा दर्शपूर्णमासाभ्यां सोमेन यजन्ते तेषामेतानि ज्योतींषि यान्यमूनि नक्षत्राणि एतस्यैव तद्यथाह वा इदमपवाहावसायिनीनामनवाश्रयि नैवावसानमेति मोऽनुपन्त एवं वैतेऽसुराम् लोकाम् नो नुपन्ते न पते मपमन्ते ॥ ८ ॥

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्ताँस्त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रेऽष्टाकपालान्निर्वपेत् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुं ये चोदिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्पशवो वा एतेऽतिरिच्यन्ते तानेवाप्नोति तानवरुन्धेऽग्निर्वै मध्यमस्य दाता इन्द्रो वै ज्येष्ठस्य प्रदाता यदेवेदं क्षुद्रं पशूनां तद्विष्णोः शिपिविष्टं तदेवाप्नोति पशूनेवावरुन्धे ॥ ९ ॥

या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वा साऽमावास्या सा सिनीवाली योत्तरा सा कुहूश्चन्द्रमा एव धाता च विधाता च यत् पूर्णोऽन्या वसत् पूर्णोऽन्यान्तत् मिथुनं यत् पश्यत्यन्यान्नान्यन्तन्मिथुनं यदमावास्यायाश्चन्द्रमा अधि-प्रजायते तन्मिथुनन्तस्मादेवास्मै मिथुनात् पशून् प्रजनयते ॥१०

न द्वे यजेत यत् पूर्वया सम्प्रति यजेतोत्तरया छं वषट् कुर्य्याद्यदुत्तरया सम्प्रति यजेत पूर्वया छं वषट् कुर्य्यान्नेष्टिर्भवति न यज्ञस्तदनुह्रीतामुख्यमुपगल्भोऽजायत एकामेव यजेत प्रगल्भो हैव जायते न द्वत्यन्त द्वे यजेत यज्ञमुखमेव पूर्वमालभते यजत उत्तरया देवता एव पूर्वयाप्नोतीन्द्रियमुत्तरया देवलोकमेव पूर्वयाऽवरुन्धे मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनामुपैत्येष ह वै सुमनानामेष्टिर्यं मध्ये याने पश्चाच्चन्द्रमा अभ्युदियादस्मा अस्मिन् लोक आर्द्धुकं भवति ॥ ११ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेद् दर्शपूर्णमासावारिप्समाणोऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चारभत ऋध्या ऋध्नोत्येवोभौ सहारभ्यावित्याहुरुदिनु शृङ्गे श्रितो मुच्यत इति दर्शो वा एतयोः पूर्वः पौर्णमास उत्तरोऽथ यत् परस्तात्पौर्णमास आरभ्यते तद्यथा पूर्वं क्रियते तद्यत्पौर्णमाससमारभमाणः सरस्वत्यै चरुं निर्वपेत्सरस्वते द्वादशक-

ऐन्द्राग्नः सन्नाग्नेन्द्र एका वै तर्हि यवस्य शुष्टिरासीदेका व्रीहेरेका माषस्यैका तिलस्य तद्विश्वेदेवा अब्रुवन् वय वा एतत् प्रथयिष्यामो भागो नोऽस्त्विति तद्भूम एव वैश्वदेवोऽथो प्रथयत्येतेनैव पयसि स्याद्वैश्वदेवत्वाय वैश्वदेव हि पयोऽथेमे अब्रूतां नवा ऋत आवाभ्यामेवैतद्यूयं प्रथयत मयि प्रतिष्ठितमसौ वृष्ट्या पचति नैतदितोऽभ्युज्जेष्यतीति भागो नावस्त्विति ताभ्यां वा एष भागः क्रियत उज्जित्या एवाथो प्रतिष्ठित्या एव ये द्यावा पृथिवीयः सोमोर्वा ओषधी सोम ओषधीनामधिराजो याश्च ग्राम्या याश्चारण्या स्तासामेव उद्वारो यच्छ्यामाको यच्छ्यामाकः सौम्यस्तमेव भागिन कृणुते यदकृत्वाऽऽग्रयण नवस्याश्नीयाद् देवाना भाग प्रतिक्लृप्तमद्यात् संवत्सराद्वा एतधिप्रजायते यदाग्रयण सवत्सर वै ब्रह्मा तस्माद् ब्रह्मा पुरस्ताद्धोमसंस्थितहोमेष्वावपेतैकहायनो दक्षिणा स हि सवत्सरस्य प्रतिमा रेत एव द्यपो प्रजात प्रजात्यै ॥ १७ ॥

अथ हैतदप्रतिरथमिन्द्रस्य बाहू स्थविरौ वृषाणावित्येतेन ह वा इन्द्रोऽसुरानप्रत्यजयदप्रतिह भवत्येतेन यजमानो भ्रातृव्य जयति सङ्ग्रामे जुहुयादप्रतिह भवत्येतेन ह वै भरद्वाज प्रतर्दन समनह्यत् स राष्ट्राभवद्य कामयेत राष्ट्री स्यादिति तमेतेन सन्नह्येद्राष्ट्री ह भवत्येतेन ह वा इन्द्रो विराजमभ्यजयद्दशैतान्याह दशाक्षरा विराड्वैराज वा एतेन यजमानो भ्रातृव्य वृङ्क्ते तदु हैक एकादशान् बाहुरेकादशाक्षरा वै त्रिष्टुप् त्रैष्टुभो वज्रो वज्रेणैवैतद्यज्ञास्यपसेधति दक्षिणतो वै देवाना यज्ञ रक्षास्यजिघांसꣳस्तान्यप्रतिरथेनापाघ्नत, तस्माद् ब्रह्मा अप्रतिरथञ्जपन्नेति । यद्ब्रह्मा अप्रतिरथ जपन्नेति, यज्ञस्याभिजित्यै रक्षसामपहत्यै रक्षसामपहत्यै १८

अथातश्चातुर्मास्यानां चातुर्मास्यानां प्रयोगः फाल्गुन्यां पौर्णमास्यां चातुर्मास्यानि प्रयुञ्जीत। मुखं वा एतत्संवत्-सरस्य, यत् फाल्गुनी पौर्णमासी मुखम् उत्तरे फल्गुनी पुच्छं पूर्वे तद्यथाप्रवृत्तस्यान्तौ समेतौ स्याताम्, एवमेवैतत् संवत्सरस्यान्तौ समेतौ भवतः। तस्यां फाल्गुन्यां पौर्णमास्यां चातुर्मास्यैर्यजते, मुखत एवैतत् संवत्सरं प्रयुङ्क्ते। अथो भैषज्ययज्ञा वा एते यच्चातुर्मास्यानि। तस्मादृतु सन्धिषु प्रयुज्यन्ते ऋतुसन्धिषु वै व्याधिर्जायते। तान्येतान्यष्टौ हवींषि भवन्ति अष्टौ वै चतुष्टय्यां पौर्णमासीनां हवींषि भवन्ति चतस्रो वै पौर्णमासीनां वै यदेव समास। अथ यदग्निं मन्थन्ति प्रजापतिर्वै यदेव प्रजाभ्य एव मथेन देव गर्भं प्रजनयति। अथ यत् सप्तदशसामिधेन्यः, सप्तदशो वै प्रजापतिः प्रजापतेराप्त्यै। अथ यत् सद्वन्तावाज्यभागावभिसम्यजीति वै सद्वन्तौ भवतः। अथ यदि राज्ञी संयाज्ये, सर्वं वै यीषि राज्ञ, यथायथ विषोऽपचर्यै। अथ यत्र प्रयाजा नवानुयाजा नवैव हवींषि वाजिनमष्टमं, तस्माच्चरीयो विराजमाप्नोति। अथो चाहुर्दशमीं विराजमिति प्रयाजानुयाजा हवींष्याघारावाज्यभागाविति ॥१८॥

अथ यदग्नीषोमौ प्रथमं देवतानां यजति अग्नीषोमौ वै देवानां मुखं मुखत एव तद् देवान् प्रीणाति। अथ यत् सवितारं यजति असौ वै सविता योऽसौ तपति एतमेव तेन प्रीणाति। अथ यत् सरस्वतीं यजति, वाग् वै सरस्वती वाचमेव तेन प्रीणाति। अथ यत् पूषणं यजति असौ वै पूषा योऽसौ तपति एतमेव तेन प्रीणाति। अथ यन्मरुतः स्वतवसो यजति, घोरा वै मरुतः स्वतवसः तानेव तेन प्रीणाति। अथ यद्विश्वान् देवान् यजति एते वै विश्वे देवाः,

यत् सर्वे देवा, तानेव तेन प्रीणाति। अथ यद् द्यावापृथिव्यौ यजति, प्रतिष्ठे वै द्यावापृथिव्यौ, प्रतिष्ठित्या एव। अथ यद्वाजिनो यजति, पशवो वै वाजिनः, पशूनेव तेन प्रीणाति। अथो ऋतवो वै वाजिन, ऋतूनेव तेन प्रीणाति। अथो छन्दांसि वै वाजिन, छन्दांस्येव तेन प्रीणाति। अथो देवाश्वा वै वाजिन, अत देवाः साश्वा अभीष्टा प्रीता भवन्ति। अथ यत्परस्तात् पौर्णमासेन यजते, तथा ह्यस्य पूर्वपक्षे वैश्वदेवेनेष्ट भवति ॥ २० ॥

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत, ता सृष्टा अप्रसूता वरुणस्य यवा जक्षुः। ताः वरुणो वरुणपाशै प्रत्यबध्नात्, ता प्रजा प्रजापति पितरमेत्योपावदन्, उप त यज्ञक्रतु जानीहि, येनेष्ट्वा वरुणमप्रीणात्। स प्रीतो वरुणो वरुणपाशेभ्य सर्वस्मात्पाप्मन सम्प्रमुच्यन्त इति। तत एत प्रजापति यज्ञक्रतुमपश्यत्, वरुणप्रघास तमाहरत् तेनायजत, तेनेष्ट्वा वरुणमप्रीणात्। स प्रीतो वरुणो वरुणपाशेभ्यः सर्वस्मात्पाप्मन प्रजा प्रामुञ्चत। प्र ह वा एतस्य प्रजा वरुणपाशेभ्य सर्वस्माच्च पाप्मनो मुच्यन्ते। य एव वेद। अथ यदग्नि प्रणयन्ति, यमेवामु वैश्वदेवे मन्थन्ति तमेव तत् प्रणयन्ति। यन्मथ्यते, तस्योक्तं ब्राह्मणम्। अथ यत् सप्तदश सामिधेन्य, सद्वन्तावाज्यभागौ, विराजौ सयाज्ये, तेषामुक्त ब्राह्मणम्। अथ यन्नव प्रयाजाः नवानुयाजा, नवैतानि हवींषि समानानि त्वेव पञ्च सञ्चराणि हवींषि भवन्ति पौष्णान्तानि, तेषामुक्त ब्राह्मणम् ॥ २१ ॥

अथ यदैन्द्राग्नो द्वादशकपालो भवति, बल वै तेज इन्द्राग्नी, बलमेव तत्तेजसि प्रतिष्ठापयति। अथ यद्वारुण्यामिक्षा, इन्द्रो वै वरुण, स उ वै पयोभाजन, तस्माद् वारु-

व्यामिक्षा। अथ यन्मारुती पयस्या पशवो वै मरुतः श्रितः पापो हि पयः। अथैन्द्रस्था वै मरुतः श्रित ऐन्द्रं पयः तस्मान्मारुती पयस्या। अथ यत् काय एककपालः, प्रजापतिर्वै कः प्रजापतेराप्त्यै। अथो सुवर्गस्य वा एतल्लोकस्य समष्ट्यमिति, सुवर्गमेव तदभ्यारभन्ते। अथ यत् मिथुनौ गावौ ददाति प्रजात्यै रूपसमृध्या वा मिथुनं। अथ यदश्वं वत्सं ददाति स एवैनन्तदायतने प्रीणाति। अथ यत्परस्तात् पौर्णमासेन यजते तथा ह्यस्य पूर्वपक्षे यज्ञमनायैरिष्टं भवति ॥२२॥

ऐन्द्रो वा एष यज्ञक्रतुः, यत् साकमेधाः, तद्यथा महाराजं पुरस्तात् सेनानीकानि प्रत्यूहमर्य पन्थानमन्वियात्। एवमेवै तत् पुरस्ताद् देवता यजन्ते तद् यथैवादः सोमस्य महाव्रतम् एवमेवैतदिष्टिमहाव्रतम्। अथ यदग्निमनीकवन्तं प्रथमं देवतानां यजति अग्निर्वै देवानां मुखं मुखत एव तद्देवान् प्रीणाति। अथ यन्माध्यन्दिने मरुतः सान्तपनान् यजति इन्द्रो वै मरुतः सान्तपनाः, ऐन्द्रं माध्यन्दिनं तस्मादिमानि न्द्रेणोपसंहितान् यजति। अथ यत् सायं गृहमेधीयेन चरन्ति, पुष्टिकर्म वै गृहमेधीयः, सायम्पोषः पशूनां तस्मात् सायं गृहमेधीयेन चरन्ति। अथ यच्छ्वोभूते गृहमेधीयस्य निष्काषमिश्रेण पूर्णाहुत्या चरन्ति पूर्वेद्युः कर्मणैवैतत् प्रातः कर्मोपसन्तन्वन्ति। अथ यत् प्रातर्मरुतः क्रीडिनो यजति, इन्द्रा वै मरुतः क्रीडिनः तस्मादिमानिन्द्रेणोपसंहितान् यजति। अथ यदग्निं प्रणयन्ति यथैवासु वैश्वदेवे मन्थन्ति तमेव तत् प्रणयन्ति, यथायती तस्योक्तं ब्राह्मणम्। अथ यत् सप्तदश सामिधेन्यः, सद्वन्तावाज्यभागौ विराजौ संयाज्ये तेषामुक्तं ब्राह्मणम्। अथ नव प्रयाजा नवानुयाजा अष्टौ हवींषि समानानि तत्र यद् पञ्चाराणि हवींषि भवन्तीन्द्राग्न्याम्नातानि,

तेषामुक्तं ब्राह्मणम्। अथ यन्महेन्द्रमन्ततो यजति, अन्तं वै श्रेष्ठो भजते, तस्मादेनमन्ततो यजति। अथ यद्वैश्वकर्मण एककपालः, असौ वै विश्वकर्मा, योऽसौ तपत्येतमेव तेन प्रीणाति। अथ यदृषभङ्गां ददाति, ऐन्द्रो ह यज्ञक्रतुः॥ २३॥

अथ यदपराह्णे पितृयज्ञेन चरन्ति, अपराह्णभाजो वै पितरः, तस्मादपराह्णे पितृयज्ञेन चरन्ति। तदाहुर्यदपरपक्षभाजो वै पितरः, कस्मादेनान् पूर्वपक्षे यजन्तीति। देवा वा एते पितरः, तस्मादेनान् पूर्वपक्षे यजन्तीति। अथ यदेकांᳲसामिधेनीन्त्रिरन्वाह, सकृदु ह वै पितरः, तस्मादेकां सामिधेनीन्त्रिरन्वाह। अथ यद्यजमानस्यार्षेयमन्वाह, नेद्यजमानं प्रवृणजानीति। अथ यत् सोमम्पितृमन्तं पितॄन् सोमवतः पितॄन् बर्हिषदः पितॄनग्निष्वात्तानित्यावाहयन्ति, न हैके स्वं महिमानमावाहयन्ति, यजमानस्यैष महिमेति वदन्त आवाहयेदिति, त्वेव स्थितमग्नेर्ह्येष महिमा भवति, ओं स्वधेत्याश्रावयति, अस्तु स्वधेति प्रत्याश्रावयति, स्वधाकारो हि पितॄणाम्। अथ यत् प्रयाजानुयाजेभ्यो बर्हिष्मन्तावुद्धरति, प्रजा वै बर्हिः, नेत् प्रजां पितृषु दधानीति। ते वै षट् सम्पद्यन्ते, षड्वा ऋतवः, ऋतवः पितरः, पितॄणामाप्त्यै॥ २४॥

अथ यज्जीवनवन्तावाज्यभागौ भवतः, यजमानमेव तज्जीवयतः। अथ यदेकैकस्य हविषस्तिस्रस्तिस्रो याज्या भवन्ति, ह्वयत्येवैना प्रथमया, द्वितीयया गमयति, प्रैव तृतीयया यच्छति। अथो देवयज्ञमेवैन पितृयज्ञेन व्यावर्त्तयन्ति, अथो दक्षिणासंस्थो वै पितृयज्ञः, तमेवैतदुदक्संस्थं कुर्वन्ति। अथ यदग्निं कव्यवाहनमन्ततो यजति, एतत् स्विष्टकृतो वै पितरः, तस्मादग्निं कव्यवाहनमन्ततो यजति। अथ यदि-

तपति, एतमेव तेन प्रीणाति। अथ यच्छ्वेता दक्षिणा ददाति, एतस्यैव तद्रूपं क्रियते। अथ यत् प्रायश्चित्तप्रतिनिधिं कुर्वन्ति, स्वस्त्ययनमेव तत् कुर्वन्ति, यज्ञस्यैव शान्तिर्यजमानस्य भैषज्याय। तैर्वा एतैश्चातुर्मास्यैर्देवाः सर्वान् कामानाप्नुवन्, सर्वा इष्टीः सर्वममृतत्वम्। स वा एष प्रजापतिश्चतुर्विंशः, यच्चातुर्मास्यानि, तस्य मुखमेव वैश्वदेवं, बाहू वरुणप्रघासाः प्राणो-ऽपानो व्यान इत्येतास्तिस्र इष्टयः, आत्मा महाहविः, प्रतिष्ठा शुनासीरं, स वा एष प्रजापतिरेव संवत्सरः, यच्चातुर्मास्यानि, सर्वं वै प्रजापतिः, सर्वं चातुर्मास्यानि, तत्सर्वेणैव सर्वमाप्नोति य एवं वेद यश्चैवं विद्वांश्चातुर्मास्यैर्यजते चातुर्मास्यैर्यजते ॥ २६ ॥

इति अथर्ववेदे गोपथब्राह्मणोत्तरभागे प्रथमः प्रपाठकः समाप्तः।

---

## अथ द्वितीयः प्रपाठकः।

ओम्। मा(ऽ)सीयन्ति वा आहिताग्नेरग्नयः, त एनमेवाग्नेऽभिध्यायन्ति यजमानं, य एतमैन्द्राग्नं पशुं षष्ठे षष्ठे मासि आलभते, तेनैवेन्द्राग्निभ्यां ग्रसितमात्मानं निरवदयत। आयुष्काम आलभेत, प्राणापानौ वा इन्द्राग्नी, प्राणापानावेवात्मनि धत्ते, आयुष्मान् भवति। प्रजाकाम आलभेत, प्राणापानौ वा इन्द्राग्नी, प्राणापानौ प्रजा अनुप्रजायन्ते, प्रजावान् भवति। पशुकाम आलभेत, प्राणापानौ वा इन्द्राग्नी, प्राणापानौ पशवोऽनुप्रजायन्ते, पशुमान् भवति। याम शुक्लं हरितमालभेत शठं वायःकाम, एता नाम य पितृलोकेस्यामित्येतेन ह वै यमोऽमुष्मिंल्लोक आर्ध्नोत्, पितृलोक एवार्ध्नोति। त्वाष्ट्रं वडवमालभेत प्रजाकाम, प्रजापतिर्वै प्रजाः सिसृक्षमाणः स द्वितीयं मिथुनमन्वाविन्दत्, स त्वाष्ट्रं वडवमपश्यत्, त्वष्टा

य एवं वेद यथैव विद्वान् ब्राह्मणाच्छंसी एतया परिदधाति ऋजीषी वज्री वृषभस्तुराषाडिति यजति। एतामेव तद्देवतां यथाभागं प्रीणाति, वषट्कृत्यानुवषट्करोति। प्रत्येवाभिमृशन्ते नाप्याययन्ति, न ह्यनाराशंसा सीदन्ति ॥२॥

तरोऽभिर्वोऽविदद्वसुन्तरणिरित्सिषासतीति, अच्छावाकस्य स्तोत्रियानुरूपौ। उदिन्वस्य रिच्यत इति, बार्हतः प्रगाथः। तस्योक्तं ब्राह्मणम्। भूय इद्वावृधे वीर्य्यायेति उक्थमुखम्। इमामूषु प्रभृतिं सातयेधा इति, पर्याम। तस्य दशमीमुद्धरति। घोरस्य वा आङ्गिरसस्यैतदार्षं नेयङ्गं निर्हरेत् शस्यमानं पिबा वर्धस्व तव घा सुतास इति यजति। एतामेव तद्देवतां यथाभागं प्रीणाति वषट्कृत्यानुवषट् करोति। प्रत्येवाभिमृशन्ते नाप्याययन्ति, न ह्यनाराशंसा सीदन्ति ॥३॥

अथाध्वर्य्यो शंसावोमिति, स्तोत्रियानुरूपाय प्रगाथाय उक्थमुखाय परिधानीयाया इति पञ्चकृत्व आह्वयन्ते। पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः। सर्वे ऐन्द्राणि त्रैष्टुभानि शंसन्ति। ऐन्द्रं हि त्रैष्टुभं माध्यन्दिनं सवनम्। सर्वे समवतीभिः परिदधति, तद्यत् समवतीभिः परिदधति। अन्तो वै पर्य्यासोऽन्त उदर्कः, अन्तेनैवान्तं परिदधति। सर्वे मद्वतीभिर्यजन्ति, तद्यत् मद्वतीभिर्यजन्ति। सर्वे सुतवतीभिः पीतवतीभिरभिरूपाभिर्यजन्ति। यद्यज्ञेऽभिरूपं, तत् समृद्धम्। सर्वेऽनुवषट् कुर्वन्ति, स्विष्टकृत्त्वा अनुवषट्कारो नेत् स्विष्टकृतमन्तरयामेति। अन्तरिक्षलोको माध्यन्दिनं सवनम्। तस्य पञ्च दिशः पञ्चोक्थानि माध्यन्दिनस्य सवनस्य। स एतैः पञ्चभिरुक्थैरेताः पञ्च दिश आप्नोत्येताः पञ्च दिश आप्नोति ॥ ४ ॥

अथ यदौपासनं तृतीयसवन उपास्यन्ते, पितॄनेव तेन

सम्भरन्ति। तिसृभिस्त्रिवृद्भिर्यज्ञो दृप्सवतीभिरभिजुहोति, सर्वमेवैनं सर्वाङ्गं सम्भरति। सौमीभिरभिजुहोति, सर्वमेवैनं स आत्मानं भरति। पञ्चभिरभिजुहोति, पाङ्क्तो यज्ञः, यज्ञमेवावरुन्धे। पाङ्क्तः पुरुषः, पुरुषमेवाप्नोति। पाङ्क्ताः पशवः, पशुष्वेव प्रतितिष्ठति। प्रतितिष्ठति प्रजया पशुभिः, य एवं वेद ॥ ७ ॥

अग्निर्वाव यम इयं यमी। कुसीदं वा एतद्यमस्य यजमान आदत्ते, यदोषधीभिर्वेदिं स्तृणाति। ता यदनुपोष्य प्रयायात्,यातयेरन्नेनममुष्मिँल्लोके यमे यत् कुसीदमयमित्यमप्रतीतमिति वेदिमुपोषन्तौ हैव सन्यमक्कुसीदं निरवदाय अनृणो भूत्वा स्वर्गं लोकमेति। विश्वलोपविश्वदावस्य त्वा स जुहोमीत्याह, होताहा यजमानस्यापराभावाय यदु मिश्रमिव चरन्त्यञ्जलिना सक्तून् प्रदाव्ये जुहुयात्। एष ह वा अग्निर्वैश्वानरो यत् प्रदातव्यः, स्वस्यामेवैनं तद्योन्यां सादयति ॥ ८ ॥

अञ्जा विधान्यामेकाष्टकायामपूपञ्चतुः शरावं पक्त्वा प्रातरेतेन कक्षमुपोषेत्। यदि दहति पुण्यसमं भवति, यदि न दहति पापसमं भवति। एतेन ह स्म वा अङ्गिरसः पुरा विज्ञानेन दीर्घसत्रमुपयन्ति। यो ह वा उपद्रष्टारमुपश्रोतारमनुख्यातारमेव विद्वान् यजते, सममुष्मिँल्लोक इष्टापूर्तेन गच्छते। अग्निर्वा उपद्रष्टा, वायुर्वा उपश्रोता, आदित्यो वा अनुख्याता, तान्य एवं विद्वान्यजते, सममुष्मिँल्लोक इष्टापूर्तेन गच्छते। यन्नो नभसस्पतिरित्याह, अग्निर्वै नभसस्पतिरग्निमेव तदाह। एतन्नो गोपायेति स त्वं नो नभसस्पतिरित्याह, वायुर्वै नभसस्पतिर्वायुमेव तदाह। एतन्नो गोपायेति देव संस्फानेत्याह, आदित्यो वै देवसंस्फानः,

मादित्यमिव तद्यथा। एतस्मो गोपायेत्ययं हि योनिरिति, यरस्योरग्निं समारोपयेत्। तद्यथा यदरस्यो समारूढो गर्भोदुदयाग्निं सीदेत्, पुनराधेयं स्यादिति। या ते अग्ने यज्ञिया तनूस्तया मे ह्यारोह तया मे ह्याविशायं ते योनिरित्यात्मन्यग्नीन् समारोपयेत्। एष ह वा अग्नियोनि र्यज्ञामिवैनं तयोस्यो धारयति ॥ ८ ॥

यो ह वा अग्निष्टोमं साङ्गं वेद अग्निष्टोमस्य साङ्गस्य सायुज्यं सलोकतामश्नुते। य एवं वेद, यो ह वा एष तपत्येषोऽग्निष्टोम एष साह्नः, तं सहैवाह्ना संस्थापयेत् साह्नो वै नामैष, तेनासंत्वरमाणाश्चरेयुः यद्वा इदं पूर्वयोः सवनयोरसंत्वरमाणाश्चरन्ति तस्मादिदं। तं प्राच्यो ग्रामता बहुलाविष्टा। अथ यदिदं तृतीयसवने संत्वरमाणाश्चरन्ति तस्मादिदं प्रत्यञ्चेदीर्घारण्यानि भवन्ति। यथैव प्रातःसवन एवं माध्यन्दिनसवन एवं तृतीयसवने। एवमु ह यजमानो अप्रमायुको भवति। तेनासंत्वरमाणाश्चरेयुः। यदा वा एष प्रातरुदेत्यथ मन्द्रतमं तपति, तस्मान्मन्द्रतमया वाचा प्रातःसवने शंसेत्। अथ यदाभ्येत्यथ बलीयस्तपति तस्माद्बलीयस्या वाचा माध्यन्दिने सवने शंसेत्। अथो यदाभितरामेत्यथ बलिष्ठतमं तपति तस्माद्बलिष्ठतमया वाचा तृतीयसवने शंसेत्। एवं शंसेत् यदि वाच ईशीत वाग् हि शस्त्रं, यया तूत्तरोत्तरयोत्तरया शक्नुयात् समापनाय तया प्रतिपद्येत। एतत् सुसमस्तरमिव भवति स वा एष न कदाचनास्तमयति नोदयति। तद्यदेनं पश्चादस्तमयतीति मन्यन्ते अह्न एव तदन्तं गत्वाथात्मानं विपर्यस्यतेऽहरेवावस्तात् कुरुते रात्रीं परस्तात्। स वा एष न कदाचनास्तमयति नोदयति। तद्यदेनं पुरस्तादुदयतीति मन्यन्ते रात्रेरेव तदन्तं गत्वाथात्मानं विपर्यस्यते

रात्रिमेवाधस्तात् कुरुतेऽह्न परस्तात्। स वा एष न कदाचनास्तमयति नोदयति न ह वै कदाचन निम्रोचति। एतस्य ह सायुज्यं सलोकतामश्नुते, य एवं वेद ॥ १० ॥

अथात एकाहस्यैव तृतीयसवनं, देवाऽसुरा वा एषु लोकेषु समयतन्त। ते देवा असुरानभ्यजयन्। ते जिता अहोरात्रयोः सन्धिं समभ्यवागुः। स हेन्द्र उवाच, इमे वा असुरा अहोरात्रयोः सन्धिं समभ्यवागुः। कश्चाहञ्चेमानसुरानभ्युत्थास्यामहा इति। अहञ्चेत्यग्निरब्रवीत्, अहञ्चेति वरुणः, अहं चेति बृहस्पतिः, अहं चेति विष्णुः। तानभ्युत्थायाहोरात्रयोः सन्धेर्निर्जघ्नुः। यदभ्युत्थायाहोरात्रयोः सन्धेर्निर्जघ्नुः, तस्मादुत्था अभ्युत्थाय ह वै द्विषन्तं भ्रातृव्यं निर्हन्ति, य एवं वेद। सोऽग्निरश्वो भूत्वा प्रथमः प्रजिगाय। यदग्निरश्वो भूत्वा प्रथमं प्रजिगाय, तस्मादाग्नेयीभिरुक्थानि प्रणयन्ति। यदग्निरश्वो भूत्वा प्रथमः प्रजिगाय, तस्मात्साकमश्वम्। यत्पञ्च देवता अभ्युत्तस्थुः, तस्मात्पञ्च देवता उक्थे शस्यन्ते। या वाक् सोऽग्निः, यः प्राणः स वरुणः, यन्मनः स इन्द्रः, यच्चक्षुः स बृहस्पतिः, यच्छ्रोत्रं स विष्णुः। एते ह वा एतान् पञ्चभिः प्राणैः समीर्योत्थापयन्। तस्मादु ह एवैताः पञ्च देवता उक्थे शस्यन्ते ॥ ११ ॥

प्रजापतिर्ह्येतेभ्यः पञ्चभ्यः प्राणेभ्यो देवान् ससृजे। यदु चेदं किं च पाङ्क्तं तत् सृष्ट्वा व्याज्वलयत्। ते होचुर्देवाः, म्लानोऽयं पिता मयोभूः, पुनरिमं समीर्योत्थापयामीति। स ह सत्त्वमाख्यायाभ्युपतिष्ठते, यदि ह वा अपि निर्णिक्तस्यैव कुलस्य सन्व्युत्तेण यजते, सत्त्व हैवाख्यायाभ्युपतिष्ठते। यो वै प्रजापतिः स यज्ञः। स एतैरेव पञ्चभिः प्राणैः समीर्योत्था-

एवमेव केवलपर्य्यासं कुर्य्यात्। केवलसूक्तं केवलसूक्तमेवोत्तरयोर्भवति। इन्द्रावरुणामधुमत्तमस्येति यजति। एते एव तत् देवते यथाभागं प्रीणाति, वषट्कृत्यानुवषट्करोति। प्रत्येवाभिमृशन्ते नाप्यायन्ति न ह्यनाराशंसाः सीदन्ति ॥१५

अथ यदैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन उक्थं भवति, इन्द्रश्च सोमं पिबतं बृहस्पतेऽस्मिन् यज्ञे मन्दसाना वृषण्वसू इत्यृचाभ्यनूक्तं मद्वद्धि तृतीयसवनम्। वयमु त्वामपूर्व्य यो न इदमिदं पुरेति ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ। प्र मंहिष्ठाय बृहते बृहद्रय इत्युक्थमुखम्। ऐन्द्रं जागतं, जागताः पशवः, पशूनामाप्त्यै। जागतमु वै तृतीयसवनं तृतीयसवनस्य रूपम्। उदप्रुतो न वयो रक्षमाणा इति बार्हस्पत्यं साम्प्रसिकम्। अहस्येति बृहस्पतिरब्रवीत्, देवतयोः संशसायानतिशसाय। अच्छाम इन्द्रं मतयः स्वर्विद इति पर्य्यासं ऐन्द्राबार्हस्पत्ये। ऐन्द्राबार्हस्पत्यमस्यैतं नित्यमुक्थम्। तदेतत् स्वस्मिन्नायतने स्वस्यां प्रतिष्ठायां प्रतिष्ठापयति। द्वन्द्वं वा एता देवता भूत्वा व्यजयन्त विजित्या एव, अथो द्वन्द्वस्यैव मिथुनस्य प्रजात्यै। बृहस्पतिर्नः परिपातु पश्चादित्यैन्द्राबार्हस्पत्या परिदधाति। इन्द्राबृहस्पत्योरेव यज्ञं प्रतिष्ठापयति, उतोत्तरस्मादधरादघायोरिन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोत्विति। सर्वाभ्य एव दिग्भ्य आशिषमाशास्ते, नार्त्तीयं कामं कामयते। सोऽस्मै कामः समृध्यते, य एवं वेद। यस्यैव विद्वान् ब्राह्मणाच्छंस्येतया परिदधाति। बृहस्पते युवमिन्द्रश्च वस्व इति यजति। एते एव तद्देवते यथाभागं प्रीणाति वषट्कृत्यानुवषट्करोति। प्रत्येवाभिमृशन्ते नाप्यायन्ति न ह्यनाराशंसाः सीदन्ति ॥ १६ ॥

अथ यदैन्द्रावैष्णवमच्छावाकस्योक्थं भवति, इन्द्राविष्णू

परिदधति। सर्वे महतीभिर्यजन्ति, तद्यन्महतीभिर्यजन्ति। सर्वे सुतवतीभिः पीतवतीभिरभिरूपाभिर्यजन्ति। यद्यज्ञेऽभिरूप, तत्समृद्धम्। सर्वेऽनुवषट् कुर्वन्ति, स्विष्टकृत्त्वा अनुवषट्कारो नेत् स्विष्टकृतमन्तरयामेति। असौ वै लोकस्तृतीयसवन, तस्य पञ्च दिश', पञ्चोक्थानि तृतीयसवनस्य। स एतै पञ्चभिरुक्थै. एता' पञ्च दिश आप्नोति। तद्यदेषा लोकानां रूप, या मात्रा। तेन रूपेण तया मात्रयेमा-ल्लोकानृध्नोतीमाल्लोकानृध्नोतीति ॥१८॥

तदाहु', कि षोडशिन षोडशित्व', षोडशस्तोत्राणि षोडशशस्त्राणि षोडशभिरक्षरैरादत्ते, ते वा अक्षरे अतिरिच्येते. षोडशिनोऽनुष्टुभमभिसम्पन्नस्य। वाचो वा एतौ स्तनौ, सत्यानृते वाव ते, अवत्येन सत्य, नैनमनृत हिनस्ति, य एव वेद ॥ १९ ॥

इत्यथर्ववेदे गोपथब्राह्मणस्य चतुर्थ प्रपाठक समाप्त ॥ ४ ॥

---

## अथ पञ्चमः प्रपाठकः।

ओम्। अहर्वै देवा आश्रयन्त रात्रीमसुराः। तेऽसुरा' समावद्वीर्या एवासन्, नो व्यावर्त्तन्त। सोऽब्रवीत्, इन्द्र कश्चाह चेमानसुरान् रात्रीमन्ववैष्यामहा इति। स देवेषु न प्रत्यविन्दत्, अबिभयू रात्रे स्तमस'। मृत्योस्तम इव हि रात्रि, मृत्युर्वै तम, तस्माद्वाप्येतर्हि भूयानिव नक्तम्। स यावन्मात्रमिवापक्रम्य बिभेति, त वै छन्दांस्येवान्ववायन्। तद्यच्छन्दांस्येवान्ववायन्, तस्मादिन्द्रस्य छन्दांसि च रात्रिं वहन्ति, न निविच्छस्यते न पुरोरुग्धाय्या नान्या देवता। इन्द्रस्य ह्येव छन्दांसि च रात्रिं वहन्ति, तान्वै पर्य्याये पर्य्याय-

परिदधति। सर्वे मद्वतीभिर्यजन्ति, तद्यन्मद्वतीभिर्यजन्ति। सर्वे सुतवतीभिः पीतवतीभिरभिरूपाभिर्यजन्ति। यद्यज्ञेऽभिरूपं, तत्समृद्धम्। सर्वेऽनुवषट् कुर्वन्ति, स्विष्टकृत्त्वा अनुवषट्कारो नेत् स्विष्टकृतमन्तरयामेति। असौ वै लोकस्तृतीयसवन, तस्य पञ्च दिश., पञ्चोक्थानि तृतीयसवनस्य। स एतै पञ्चभिरुक्थैः एताः पञ्च दिश आप्नोति। तद्यदेषा लोकानां रूप, या मात्रा। तेन रूपेण तया मात्रयेमाल्लोकानृध्नोतीमाल्लोकानृध्नोतीति ॥१८॥

तदाहु', किं षोडशिन. षोडशित्व, षोडशस्तोत्राणि षोडशशस्त्राणि षोडशभिरक्षरैरादत्ते, तै वा अक्षरे अतिरिच्येते, षोडशिनोऽनुष्टुभमभिसम्पन्नस्य। वाचो वा एतौ स्तनौ, सत्यानृते वाव ते, अवत्यैन सत्य, नैनमनृत हिनस्ति, य एव वेद ॥ १९ ॥

इत्यथर्ववेदे गोपथब्राह्मणस्य चतुर्थं प्रपाठक समाप्त ॥ ४ ॥

---

## अथ पञ्चमः प्रपाठकः ।

ओम्। अहर्वै देवा आश्रयन्त रात्रीमसुरा। तेऽसुरा' समावद्वीर्य्या एवासन्, नो व्यावर्त्तन्त। सोऽब्रवीत्, इन्द्र कश्चाहं चेमानसुरान् रात्रीमन्ववेष्यामहा इति। स देवेषु न प्रत्यविन्दत्, अबिभयू रात्रे स्तमस'। मृत्योस्तम इव हि रात्रि', मृत्युर्वै तम, तस्माद्वाप्येतर्हि भूयानिव नक्तम्। स यावन्मात्रमिवाप्रक्रम्य बिभेति, त वै छन्दांस्येवान्ववायन्। तद्यच्छन्दांस्येवान्ववायन्, तस्मादिन्द्रस्य छन्दांसि च रात्रिं वहन्ति, न निविच्छस्यते न पुरोरुग्धाय्या नान्या देवता। इन्द्रस्य ह्येव छन्दांसि च रात्रिं वहन्ति, तान्वै पर्य्यायैः पर्य्याय-

मनुदन्त। यत् पर्याये पर्यायमनुदन्त, तस्मात् पर्यायाः, तत् पर्यायाणां पर्यायत्वम्। तान्वै प्रथमैरेव पर्यायैः पूर्वरात्रादनुदन्त मध्यमैर्मध्यरात्रादुत्तमैरपररात्रात्। अपि शर्वर्या अपिपित्वमभूम। तथदपि शर्वर्या अपिपित्वमभूम, तदपिशर्वराणामपिशर्वरत्वम्। शर्वराणि खलु वा एतानि छन्दांसीति ह स्माह। एतानि ह वा इन्द्रं रात्रेस्तमसो मृत्योरभिपत्वावारयन्, तदपिशर्वराणामपि शर्वरत्वम्॥ १॥

प्रथमेषु पर्यायेषु स्तुवते प्रथमान्येव पदानि पुनराददते। यदेवैषां मनोरथा आसन् तदेवैषां तेनाददते। मध्यमेषु पर्यायेषु स्तुवते मध्यमान्येव पदानि पुनराददते। यदेवैषामश्वा गाव आसन् तदेवैषां तेनाददते। उत्तमेषु पर्यायेषु स्तुवते उत्तमान्येव पदानि पुनराददते। यदेवैषां वासो हिरण्यं मणिरध्यात्ममासीत्, तदेवैषां तेनाददते। आ द्विषतो वसु दत्ते, निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद॥ २॥

पवमानवदहरित्याहुः, न रात्रिः पवमानवती, कथमुभे पवमानवती भवतः केन ते समावद्भाजौ भवत इति। यद्वा इन्द्राय मदने सुतमिदं वसो सुतमन्ध इदं ह्यन्वोजसा सुतमिति स्तुवन्ति च शंसन्ति च तेन रात्रिः पवमानवती एवमुभे पवमानवती भवतः तेन ते समावद्भाजौ भवतः। पञ्चदशस्तोत्रमहरित्याहुः न रात्रिः पञ्चदशस्तोत्रा, कथमुभे पञ्चदशस्तोत्रे भवतः, केन ते समावद्भाजौ भवत इति। द्वादश स्तोत्राण्यपिशर्वराणि तिसृभिर्देवताभिः सन्धिना राथन्तरेण त्रिणा य स्तुवते तेन रात्रिः पञ्चदशस्तोत्रा, एवमुभे पञ्चदश स्तोत्रे भवतः तेन ते समावद्भाजौ भवतः। परिमितं स्तुवन्ति

परिमितमनुशंसन्ति, परिमितं भूतमपरिमितं भव्यमपरिमितान्येवावरुन्ध्यादित्यतिशंसन्ति। स्तोममति वै प्रजास्यात्मानमतिपशवः। तद्यदेवास्यात्मानन्तदेवास्यैतेनाप्याययन्ति। अथो द्वय वा इदं सर्वं स्नेहश्चैव तत्तेजश्च। अथ तदहोरात्राभ्यामाप्त्र स्नेहतेजसोरात्रैः। गायत्री स्तोत्रियानुरूप शंसन्ति, तेजो, वै गायत्री, तम पाप्मा, रात्रिस्तेन तेजसा तम पाप्मानन्तरन्ति पुनरादाय, शंसन्ति। एव हि सामगा स्तुवते, यथास्तुतमनुशस्त भवति। न हि तत् स्तुत यन्नानुशस्तम्। तदाहु, अथ कस्मादुत्तमात् प्रतीहारादाहृय साम्ना शस्त्रमुपसन्तन्वन्तीति ॥ २ ॥

पुरुषो वै यज्ञ, तस्य शिर एव हविर्धान, मुखमाहवनीय, उदर सद, अन्नकुथानि, बाहू मार्ज्जालीयश्चाग्नीध्रीयश्च, या इमा देवतास्ते अन्त सद, सन्धिष्ठ्यप्रतिष्ठे गार्हपत्यव्रतश्रवणौ इति। अथापरन्तस्य, मन एव ब्रह्मा, प्राण उद्गाता, अपान प्रस्तोता, व्यान प्रतिहर्त्ता, वाग्घोता, चक्षुरध्वर्यु, प्रजापति सदस्य, अङ्गानि होत्राशंसिन, आत्मा यजमानः। तद्यदध्वर्युस्तोत्रमुपाकरोति सोम पवत इति, चक्षुरेव तत् प्राणे सन्दधाति। अथ यत् प्रस्तोता ब्रह्माणमामन्त्रयते, ब्रह्मन् स्तोष्याम प्रशास्तरिति। मनोग्रणीर्भवति एतेषा प्राणाना, मनसा हि प्रसूता स्तोमेन स्तवामेति, प्राणानेव तत् मनसा सन्दधाति। अथ यत् ब्रह्मा स्तुतेत्युच्चैरनुजानाति, मनो वै ब्रह्म, मन एव तत् प्राणे सन्दधाति। अथ यत् प्रस्तोता प्रस्तौति, अपानमेव तत् प्राणे सन्दधाति। अथ यत् प्रतिहर्त्ता प्रतिहरति, व्यानमेव तदपाने सन्दधाति। अथ यदुद्गातोद्गायति, समानमेव तत् प्राणे सन्दधाति। अथ यद्धोता साम्ना शस्त्रमुपसन्तनोति, वाग्वै होता, वाचमेव तत्

प्राचे सन्दधाति। अथ यत् सदस्यो ब्रह्माणमुपासीदति प्रजापतिर्वै सदस्यः प्रजापतिमेवाप्नोति। अथ यद्धोत्राशंसिनः साम्नः सन्ततिं कुर्वन्ति अङ्गानि वै होत्राशंसिनः अङ्गान्येवास्य तत् प्राचे सन्दधाति। अथ यद्यजमानस्तोत्रमुपासीदति आत्मा वै यजमानः आत्मानमेवास्य तत् कल्पयति। तस्मा एनं बहिर्वेद्यभ्यावर्तयेयुर्नाभ्युदियान्नाभ्यस्तमियात् नाभिष्ठेव प्रतपिबेत् प्राणेभ्य आत्मानमन्तरगादिति ॥ ४ ॥

प्रथमेषु पर्यायेषु स्तुवते प्रथमेषु पदेषु निनर्दयन्ति प्रथमरात्रादेव तदसुरान्निर्घ्नन्ति। मध्यमेषु पर्यायेषु स्तुवते मध्यमेषु पदेषु निनर्दयन्ति मध्यमरात्रादेव तदसुरान्निर्घ्नन्ति। उत्तमेषु पर्यायेषु स्तुवते उत्तमेषु निनर्दयन्ति उत्तमरात्रादेव तदसुरान्निर्घ्नन्ति। तथायाभ्यामाघातात् पुनः पुनः पाप्मानं निर्हरन्त्यवमेवैतत् स्तोत्रियानुरूपाभ्यामहोरात्राभ्यामेव तदसुरान्निर्घ्नन्ति। गायत्री भवन्ति तेजो वै ब्रह्मवर्चसं गायत्री तेज एवास्मै तद् ब्रह्मवर्चसं यजमाने दधाति। गायत्री मध्या जगतीं शंसन्ति ब्रह्म ह वै जगती ब्रह्मैवास्मै तद् ब्रह्मवर्चसं यजमाने दधाति। व्याहृयन्ते गायत्रीव जगतीवान्तरेण छन्दांस्येव त नानावीर्याणि कुर्वन्ति। जगतीं मध्या त्रिष्टुभं शंसन्ति पशवो वै जगती पशूनेव तत् त्रिष्टुभा परिदधाति। बलं वै वीर्यं त्रिष्टुप् बलमेव तद्वीर्येऽन्ततः प्रतिष्ठापयति। अन्धस्वत्यो मद्वत्यः सुतवत्यः पीतवत्यस्त्रिष्टुभो याज्याः समृद्धा सुतवत्यः एतद्वै रात्रीरूपं वापियात्। रात्रिं यावद्ध वै न वा स्तुवते न वा शस्यते तावदीश्वरा असुररक्षांसि च यज्ञमनुपनयन्ति। तस्मादाचमनीयं समिधमाग्नीध्रीय गार्हपत्यं विहार समुज्ज्वलयते। अतिमायमेरन् व्ययमेरन् प्रजायमिव वै तस्मादारे शिवं सुवीरस्ताम् सतः मोह्यो वा इति पाप्मा

नाभिहृक्षोति। ते तम'पाप्मानमपाघ्नते तेतम पाप्मानमपा घ्नते ॥ ५ ॥

विश्वरूप वै त्वाष्ट्रमिन्द्रोऽहृ स त्वष्टा हतपुत्रोऽभिचरणीयम-पेन्द्र सोममाहरत्। तस्येन्द्रो जघ्निरे। स मस्कृत्वा प्रासहा सोममपिवत् स विष्टद्रर्छंत्। तस्मात् सोमो नानुपहृतेन न पातव्य। सोमपीथोऽस्य हृग्रद्धिको भवति। तस्य मुखात् प्राणेभ्य श्रीर्यशास्य ध्वान्युदक्रामत्। तानि पशून् प्राविशन्। तस्मात् पशवो यशोऽयशो ह भवति, य एव वेद। ततोऽस्मा एतदश्विनी च सरस्वती च यज्ञ समभरन्, सौत्रामणि भैष-ज्याय। तयेन्द्रमभ्यषिञ्चन्। ततो वै स देवाना श्रेष्ठोऽभ-वत्। श्रेष्ठ स्वाना चान्येषा च भवति, य एव वेद यश्चैव विद्वान् सौत्रामण्याभिषिच्यते ॥ ६ ॥

अथ साम गायति ब्रह्मा, क्षत्र वै साम, क्षत्रेणैवैन तदभि-षिञ्चति। अथो साम्राज्य वै साम, साम्राज्येनैवैन तत् साम्राज्य गमयति। अथो सर्वेषा वा एष वेदाना रस, यत् साम, सर्वेषामेव तद्वेदाना रसेनाभिषिञ्चति। बृहत्यां गायन्ति, बृहत्या वा असावादित्य. श्रिया प्रतिष्ठाया प्रतिष्ठतस्तपति। ऐन्द्र्या बृहत्या गायति। ऐन्द्रो वा एष यज्ञक्रतुर्यत् सौत्रा-मणि'। ऐन्द्रायतन एष एतर्हि यो यजते, स्व एवैन तदाय-तने प्रीणाति। अथ कस्मात् सश्रानानि नाम, एतैर्वै साम-भिर्देवा इन्द्रमिन्द्रियेण वीर्य्येण समश्नन्, तथैवैतद्यजमाना एतै-रेव सामभिरिन्द्रियेणैव वीर्य्येण सऽश्नन्ति। सश्रवसे विश्र-वसे सत्यश्रवसे श्रवस इति सामानि भवन्ति। एष्वेवैन लोकेषु प्रतिष्ठापयति। चतुर्निधन भवति, चतस्रो वै दिश, दिक्षु तत् प्रतितिष्ठन्ते। अथो चतुष्पाद पशव, पशूनामाप्त्यै। तदाहु, यदे तत् साम गीयते, अथ क्वैतस्य साम्नमुक्थ, का प्रतिष्ठा। त्रयो देवा एकादशेत्याहु, एतद्वा एतस्य साम्नमुक्थ-

अतिरिक्तोक्थे वारवन्तीयेनावारयन्, तस्मादेषोऽतिरिक्तोक्थवान् भवति। तस्माद्वारवन्तीयं ता यदाप्ता यच्छत्, अतो वा अप्तोर्यामा। अथो प्रजावाप्नुरित्याहु', प्रजाना यमन इतीहैवैदुक्थ ५ ता वर्हि. प्रजा' आयेरस्तर्हि हैतेन यजते स एषोऽष्टापृष्ठो भवति, तद्यथान्यस्मिन् यज्ञे विश्वजित' पृष्ठमनुसञ्चर भवति, कथमेतदेवमवेति। पितैष यज्ञाना तद्यथा श्रेष्ठिनि सवश्रेयुरपि विद्विषाणा ,एवमेवं तच्छ्रेष्ठिनो वशेयान मन्नस्यानुचर्य्याय चमन्ते ॥ ९ ॥

तद्यथैवादोऽङ्क उक्थानामाग्नेय प्रथम भवति, एवमेवैतदत्राप्याग्नेय प्रथम भवति। ऐन्द्रे वाव तत्रोत्तरे ऐन्द्रे वा एते ऐन्द्रावैष्णवमच्छावाकस्योक्थ' भवति। चतुराह्वावान्यतिरिक्तोक्थानि भवन्ति, चतुष्टया वै पशव., अथो चतुष्पाद - पशव, पशूनामाप्त्यै। त एते स्तोत्रियानुरूपास्तृचा अर्द्धर्चशस्या। प्रतिष्ठा वा अर्द्धर्च' प्रतिष्ठित्या एव। अथैतेषामेवाश्विनाना सूक्ताना द्वे द्वे समाहावमेकैकमहरह शसति, अश्विनौ वै देवाना भिषजौ, तस्मादाश्विनानि सूक्तानि श५सन्ति, तदश्विभ्या प्रददुरिद भिषज्यतमिति। चेत्रवत्य परिधानीया भवन्ति. यत्र हतस्ततप्रजा अशनायन्ती पिबासन्तो सरुद्धा स्थिता आसन्, ता दीना एताभिर्यथाचेत्रं पाययाञ्चकार, तर्पयाञ्चकार, अथो इय वै चेत्र' पृथिवी, अस्यामदीनायामन्तत प्रतिष्ठास्यामहा इति। त्रिष्टुभो याज्या भवन्ति, यत्र हतस्ततप्रजा अशनायन्तो पिबासन्ती सरुद्धा स्थिता बभूवु, ता हैवैना एताभिर्यथौकस व्यवसाययाञ्चकार, तस्मादेता याज्या भवन्ति तस्मादेता याज्या भवन्ति ॥१०॥

अथातोनैकाह्निक स्व स्तोत्रियमद्यस्तोत्रियस्यानुरूप कुर्वन्ति, प्रात सवनेऽहीनस्य सन्तत्यै। तद्यथा ह वा एकाहस्तुत

दृढानि दृंहितानि च । स्थिराणि न पराणुद इति, स्वर्गमेवै-
तयाहरहर्लोकमवरुन्धे । आह सरस्वतीवतीरित्यच्छावाकस्य ।
इन्द्राग्न्योरवोवृण इति, एतद्ध वा इन्द्राग्न्योः प्रियम धामः,
यद्वागिति, प्रियेणैवैनौ तद्धाम्ना समर्द्धयति । प्रियेणैव धाम्ना
समृध्यते, य एव वेद ॥ १३ ॥

उभय्यो होत्रकाणां परिधानीया भवन्ति, अहीनपरिधा-
नीयाश्चैकाहिन्यश्च, तत एकाहिकीभिरेव मैत्रावरुण परि-
दधाति, ते नास्माल्लोकान्न प्रच्यवते । आहिनीकीभिरच्छा-
वाक स्वर्गस्य लोकस्यार्त्यै, उभयीभिर्ब्राह्मणाच्छंसी । एवम-
सावुभौ व्यन्वारभमाण एतीमञ्च लोकममुञ्च । अथोऽहीन-
ञ्चकाहञ्च,अथो सवत्सरञ्चाग्निष्टोमञ्च, अथो मैत्रावरुणञ्चाच्छा-
वाकञ्च, एवमसावुभौ व्यन्वारभमाण एति । अथ तत एका-
हिकीभिरेव तृतीयसवने होत्रका परिदधाति, तेनास्माल्लो-
कान्न प्रच्यवते । आहिनीकीभिरच्छावाक स्वर्गस्य लोकस्य
समर्ध्यै । काम तद्धोता शंसेत्, यद्धोत्रकाः पूर्वेद्यु शंसेयुः ।
यद्वै होता तद्धोत्रका, प्राणो वै होता, अङ्गानि होत्रका,
समानो वा अय प्राणोऽङ्गान्यनुसञ्चरन्ति । तस्मात् तत् काम
होता शंसेत्, यद्धोत्रका पूर्वेद्यु शंसेयु । यद्वै होता तद्धो-
त्रका, आत्मा वै होता,अङ्गानि होत्रका', समानो वा इमेऽङ्गा-
नामन्ता', तस्मात् तत् काम होता शंसेत् । यद्धोत्रका'
पूर्वेद्यु शंसेयु, यद्वै होता तद्धोत्रका, सूक्तान्तैर्होत्रा परिद-
धाति, अथ समान्य एव होत्रकाणां परिधानीया भवन्ति ॥१४

य स्व'स्तोत्रियमथस्तोत्रियस्यानुरूप कुर्वन्ति, प्रात -
सवनेऽहीनमेव तत्सन्तन्वन्ति, अहीनस्य सन्तत्यै । त एते
होत्रका प्रात सवने । षडहस्तोत्रिय शस्त्वा माध्यन्दिनेऽहीन-
सूक्तानि शंसन्ति, मत्वो यातु मघवाम् ऋजीषीति । सत्यवान्

कनीन उदु ब्रह्माण्येरतश्रवस्याभितष्टे वदीधया मनीषामिति विश्वामित्र.। इन्द्रः पूर्भिदातिरद्दासमर्कैर्य एक इद्धव्यश्चर्षणीनां यस्तिग्मशृङ्गो वृषभो न भीम इति वसिष्ठ। इमामूषुप्रभृति सातयेधा इच्छन्ति त्वा सोम्यासः सखायः शासद्वह्निर्दुहितुर्नप्त्यङ्गादिति भरद्वाज'। एतैर्वै सम्पातैरेत ऋषय इमान् लोकान् समपतन्। तद्यत्समपतन्, तस्मात् सम्पाता', तत् सम्पातानां सम्पातत्वम्। ततो वा एतां स्त्रीन् सम्पातान् मैत्रावरुणो विपर्य्यासमेकैकमहरह. शंसति, एवा त्वामिन्द्र वज्रिन्नत्रेति प्रथमेऽहनि, यन्न इन्द्रो जुजुषे यच्च वष्टीति द्वितीये, कथामहामवृधत् कस्य होतुरिति तृतीये। त्रीनेव सम्पातान् ब्राह्मणाच्छंसी विपर्य्यासमेकैकमहरह' शंसति, इन्द्र. पूर्भिदातिरद्दासमर्कैरिति प्रथमेऽहनि, य एक इद्धव्यश्चर्षणीनामिति द्वितीये, यस्तिग्मशृङ्गो वृषभो न भीम इति तृतीये। त्रीनेव सम्पातानच्छावाको विपर्यासमेकैकमहरहः शंसति, मामूषुप्रभृति सातयेधा इति प्रथमेऽहनि, इच्छन्ति त्वा सोम्यास' सखाय इति द्वितीये, शासद्वह्निर्दुहितुर्नप्त्यङ्गादिति तृतीये। तानि वा एतानि नव त्रीणि चाहरह' शंस्यानि। तानि द्वादश भवन्ति। द्वादश ह वै मासाः सवत्सर', संवत्सरः प्रजापति, प्रजापतिर्यज्ञः, तत् सवत्सरं प्रजापतिं यज्ञमाप्नोति। तस्मिन् सवत्सरे प्रजापतौ यज्ञे अहरह प्रतितिष्ठन्तो यन्ति, प्रतितिष्ठन्ते। इद सर्वमनुप्रतितिष्ठति। प्रतितिष्ठति प्रजया पशुभि, य एव वेद। तान्यन्तरेणावापमावपेरन्, अन्यूङ्खा विराजश्चतुर्थेऽहनि, वैपदीय पङ्क्ती पञ्चमे, पारुच्छेपी षष्ठेऽथ यान्यन्यानि महास्तोत्राख्यष्टर्चान्यावपेरन्॥ १॥

को अद्य नर्यो देवकाम इति मैत्रावरुण। वनेन वा योऽन्यधायि चाकन्निति ब्राह्मणाच्छंसी। आयाह्यर्वाङुपबन्धुरेष्ट

इमञ्चावापन्त । एतानि वा आवपनानि एतैर्वा आवपनैर्देवाश्च ऋषयश्च स्वर्गं लोकमायन् । तथैवैतद्यजमाना एतैरावपनैः स्वर्गं लोकं यन्ति । सद्यो ह जातो वृषभः कनीन इति मेधा यस्य पुरस्तात् सम्पातानामहरहः शंसति । तदेतत् सूक्तं स्वर्ग्यमेतेन सूक्तेन देवाश्च ऋषयश्च स्वर्गं लोकमायन् । तथैवैतद्यजमाना एतेनैव सूक्तेन स्वर्गं लोकं यन्ति । तदभवत् पशुमद्भवति पशूनामाप्त्यै । तत्पञ्चर्चं भवति पञ्च वै षड्भिः पञ्चायव्यावयवे परिष्टेन पचिभि पारयिष्यति समताया एवैतदहरहः शंसति । तदु महाव्रतेतस्यन्त्येति आह्वना-श्वपृशौ । अग्निस्तदेतत् सूक्तं महत्त्वेनैव सूक्तेन देवाश्च ऋषयश्च स्वर्गं लोकमायन् । तथैवैतद्यजमाना एतेनैव सूक्तेन स्वर्गं लोकं यन्ति । तदु वै षडर्चं षड् वा ऋतवः, ऋतूना माप्त्यै । तदुपरिष्टात् सम्पातानामहरहः शंसति । अभितष्टे व दीधया मनीषामित्यावापो अहरहः शंसति । अभि वदति तस्मै रूपमभिप्रियाणि मर्मृशत्पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव तदभिमृशन्तो यन्ति स्वारभमाणाः । परो वा अस्माल्लोकात् स्वर्गो लोकः, तमेव तं लोकमभिवदन्ति । कवीं रिच्छामि सन्दृशे सुमेधा इति ये ह वा अनेन पूर्वे प्रेतास्ते वै कवयः तानेवैतदभि वदति । यदु वै दशर्चं दश वै प्राणाः प्राणानेव तदाप्नोति प्राणानां सन्तत्यै । यदु वै दशर्चं दश वै पुरुषे प्राणाः, दश स्वर्गा लोकाः, प्राणानेव तत् स्वर्गांश्च लोकानाप्नोति । प्राणेषु चैवैतत् स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति । यदु वै दशर्चं दशाक्षरा विराड् अन्नं वै विराड्, अन्नं वै स्वर्गस्य लोकस्य प्रतिष्ठा तदेतदस्यां प्रतिष्ठायां प्रतिष्ठापयति । सत्रादिन्द्रं निराह्वे मैन्द्राबृहस्पत्यं प्रभवति तदुपरिष्टात् सम्पातानामहरहः शंसति ॥ २ ॥

कस्तमिन्द्र त्वा वसुं कन्नव्यो अतसीनां कद्रूमन्वस्यात इति कद्वन्तः प्रगाथा अहरहः शंसति। एको वै प्रजापतिः, प्रजापतेराप्त्यै। यदेव कद्वन्तः,तत् स्वर्गस्य लोकस्य रूपम्। यदेव कद्वन्तं,अथो अन्नं वै कम्, अथो अन्नस्यावरुध्यै। यदेव कद्वन्तं, अथो सुखं वै कम्, अथो सुखस्यावरुध्यै। यदेव कद्वन्तं, अथोहरहर्वा एते, शान्तान्यहीनसूक्तान्युपयुञ्जाना यन्ति, तानि कद्वद्भिः प्रगाथैः शमयन्ति। तान्येभ्यः शान्तानिक भवन्ति, तान्येतान् क्रान्तानि स्वर्गं लोकमभिवहन्ति। त्रिष्टुभः सूक्तः प्रतिपदः शंसेयुः, ता हैके पुरस्तात् प्रगाथाना शंसन्ति, धाय्या इति वदन्तस्तदु तथा न कुर्यात्। क्षत्रं वै होता, विशो होत्रा शंसिनः, क्षत्रस्यैव तद्विष प्रत्युद्यामिनी कुर्युः। पावमानस्य सन्त्रिष्टुभौ मा इमाः सूक्तः प्रतिपद इत्येव विद्यात्, यथा वै समुद्रं प्रतरेयुः, एवं हैवैते प्रप्लवयन्ते ये संवत्सरं द्वादशाहं वोपासन्ते, तद्यथा सैरावती नावं पारकामाः समारोहेयुः एवं हैवैतास्त्रिष्टुभः स्वर्गकामाः समारोहन्ति। न ह वा एतच्छन्दो गमयित्वा स्वर्गं लोकमुपावर्त्तन्ते। वीर्य्यवन्त महिताभ्यो नद्याह्वयीत, समानं हि छन्दः, अथोऽन्ये धाय्या करवाणीति। यदेनाः शंसन्ति, तत् स्वर्गस्य लोकस्य रूपम्। यद्देवैनाः शंसन्ति, इन्द्रमेवैतैर्निह्वयन्ते, यथा ऋषभं वासितायै ॥३॥

अपेन्द्र प्राचो मघवन्नमित्रानिति, मैत्रावरुणः पुरस्तात् सम्पातानामहरहः शंसति। अपापाचो अभिभूते नुदस्वापोदीचो अप शूरा धराच उरौ यथा तव शर्म्मन् मदेमेति, अभयस्य रूपमभयमिव ह्यन्विच्छन्तीति, ब्रह्मणा ते ब्रह्मयुजा युनज्मीति, ब्राह्मणाच्छंस्येतामहरहः शंसति। युक्तावती युक्त इवाह्यहीनोऽहीनस्य रूपमुरु नो लोकमनुनेषीति,

अपर शुक्लमपर कृष्ण, तस्माद् द्व्युक्थ'। रश्मयो वाव होत्रा', ते वा एकैक, तस्मादेकोक्था'। तद्यदेकैकस्य रश्मेर्द्वौ द्वौ वर्णौ भवत', तस्माद् द्विसूक्ता.। संवत्सरो वाव होता, स वा एक एव, तस्मादेकसूक्त। तस्य यद् द्वयान्यहानि भवन्ति, शीतान्यन्यान्युष्णान्यन्यानि, तस्माद् द्व्युक्थ'। ऋतवो वाव होत्राः, ते वा एकैक, तस्मादेकोक्था.। तद्यदेकैकस्यर्तौ द्वौ द्वौ मासौ भवत, तस्माद्द्विसूक्ता। पुरुषो वाव होता, स वा एक एव, तस्मादेकसूक्त। स यत्पुरुषो भवत्यन्यथैव प्रत्यङ् भवत्यन्यथा प्राङ्, तस्माद् द्व्युक्थ। अङ्गानि वाव होत्रा, तानि वा एकैक, तस्मादेकोक्था। तं यदेकैकस्याङ्ग द्युतिर्भवति, तस्माद् द्विसूक्ता। तदाहु, यद् द्व्युक्थो होतैकसूक्त एकोक्था होत्रा द्विसूक्ता, कथ तत् समं भवति, यदेन द्विदेवत्याभिर्यजन्ति, अथो यद् द्विसूक्ता होत्रा इति ब्रूयात्, तदाहु, यदग्निष्टोम एव सति यज्ञे द्वे होतुरुक्थे अतिरिच्येते, कथ ततो होत्रा न व्यवच्छिद्यन्त इति। यदेव द्विदेवत्याभिर्यजन्ति, अथो यद् द्विसूक्ता होत्रा इति ब्रूयात्, तदाहु, यदग्निष्टोम एव सति यज्ञे सर्वा देवता सर्वाणि छन्दास्याप्याययन्ति, अथ कतमेन छन्दसायातयामान्युक्थानि प्रणयन्ति, कया देवतयेति। गायत्रेण छन्दसाग्निना देवतयेति ब्रूयात्। देवान् ह यज्ञ तन्वाना असुररक्षास्यभिचेरिरे यज्ञपर्वणि, यज्ञमेषां हनिष्यामस्तृतीयसवन प्रति तृतीयसवने ह यज्ञस्त्वरिष्टो वलिष्ठ प्रतनुमेषां यज्ञ हनिष्याम इति। ते वरुण दक्षिणतोऽयोजयन्, मध्यतो बृहस्पतिमुत्तरतो विष्णुम्। तेऽब्रुवन्, एकैका' स्म, नेदमुत्सहामहेति, स्तुनो द्वितीयो येनेद सह व्यश्नवामहा इति। तानिन्द्रोऽब्रवीत्, सर्वे मद् द्वितीया स्थेति। ते सर्वे इन्द्र द्वितीया, तस्मादैन्द्रावारुणमैन्द्राबार्ह-

रूपम्। यद्देव शिल्पानि, आत्मसंस्कृतिर्वै शिल्पान्यात्मानमेवास्य तत् संस्कुर्वन्ति ॥ ७ ॥

नाभानेदिष्टं शंसति, रेतो वै नाभानेदिष्ट। रेत एवास्य तत् कल्पयति। तद्रेतो मिश्रं भवति, छमया रेत. मञ्जग्मानो निषिञ्चदिति, रेतसः समृध्या एव। त नाराशंसं शंसति, प्रजा वै नर, वाक् शंसः, प्रजासु तद्वाचं दधाति। तस्मादिमा प्रजा अदन्त्यो जायन्ते। तं हैके पुरस्तात् प्रगाथाना शंसन्ति, पुरस्तादायतना वागिति वदन्ते, उपरिष्टादेके। उपरिष्टादायतना वागिति वदन्तो मध्य एव शंसेत्, मध्यायतना वा इयं वाग्, उपरिष्टान्नेदीयसीव त होता रेतो भूतं शस्त्वा मैत्रावरुणाय सम्प्रयच्छति। एतस्य त्वं प्राणान् कल्पयति, वालखिल्या' शंसन्ति, प्राणा वै वालखिल्या', प्राणानेवास्य तत् कल्पयति। ताविहृता शंसति, विहृता व प्राणा. प्राणेनापानो अपानेन व्यान'। स पच्छ प्रथमे सूक्ते विहरति, अर्द्धर्चशो द्वितीये, ऋक्शस्तृतीये। स यत् प्रथमे सूक्ते विहरति, वाचं चैव तन्मनश्च विहरति। यद् द्वितीये चक्षुश्चैव तच्छ्रोत्रं च विहरति। यत्तृतीये प्राणं चैव, तदात्मानं च विहरति। तदुपाप्तो विहरेत्, काम, अन्ये तु वै प्रगाथा कल्पयन्तेति मर्शं समेव विहरेत्। तथा वै प्रगाथा कल्पयन्ते। यदेवातिमर्शं, तत् स्वर्गस्य लोकस्य रूपम्। यद्देवातिमर्शं, आत्मा वै बृहती, प्राणा सतो बृहती, स बृहतीमशंसीत्। स आत्माथ सतो बृहतीं, ते प्राणा अथ बृहतीमथ सतो बृहतीं, तदात्मानं प्राणै परिबृढन्नेति। यद्देवातिमर्शं, आत्मा वै बृहती, प्रजा सतोबृहती, स बृहतीमशंसीत्। स आत्माथ सतोबृहती, ते प्रजा अथ बृहतीमथ सतो बृहतीं, तदात्मानं प्रजया परिबृढन्नेति। यद्देवातिमर्शं, आत्मा वै

तद्ध तथा शस्यमाने गोश्ल आजगाम । स होवाच, होत कथा ते शस्त्रं विचक्र प्लवत इति, किं ह्यभूयदित्येव या मरुद्यमुत्तरतः शस्यत इति । स होवाच, इन्द्रो वै माध्यन्दिनः, कथेन्द्र माध्यन्दिनान्यनीकसीति, नेन्द्र माध्यन्दिनान्यनीषामिति । स होवाच, छन्दस्त्विदमु माध्यन्दिन, सातिजागतं वाति, जागतं वा स उ मारुतो मेव ससृष्टेति । स होवाच, अस्माच्छावाकेऽन्ययास्मिन्ननुशासनमीषे । स होवाच, इन्द्रमेष विष्णु न्यङ्गानि शसति, अथ त्वं होतुरुपरिष्टाद्रौद्रिया धाय्या, या पुरस्तान्मारुतस्य सूक्तस्याप्यस्यथा इति । तथेति । तदप्येतर्हि तथैव शस्यते, यथा षष्ठे पृष्ठ्याहनि । कल्पत एव यज्ञ, कल्पते यजमानस्य प्रजापतिः, कथमत्राशस्त एव नाभानेदिष्टो भवति । अथ वालखिल्या शसति, रेतो वा अग्रेऽथ प्राणा एव ब्राह्मणाच्छस्यशस्त एव नाभानेदिष्टो भवति । अथ वृषाकपि शसति, रेतो वा अग्रेऽथात्मा, कथमत्र यजमानस्य प्रजापति, कथ प्राणा अवरुद्धा भवन्तीति । यजमान वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति, स यथा गर्भो योन्यामन्तरेव सम्भवच्छेते, न ह वै सकृदेवा अग्रे सर्वं सम्भवति, एकैक वाङ्ग सम्भवति । सर्वाणि चेत्समानेऽहनि क्रियेरन्, कल्पयत एव यज्ञ, कल्पते यजमानस्य प्रजापति । अथ हैव एव या मरुतं होता शसेत्, तस्यास्य प्रतिष्ठा, तस्या एवैनमन्तत प्रतिष्ठापयति प्रतिष्ठापयति ॥ ६ ॥

देवचेत्र वै षष्ठमह । देवचेत्र वा एत आगच्छन्ति, ये षष्ठमहरागच्छन्ति । न वै देवा अन्योऽन्यस्य गृहे वसन्ति, नर्त्तु ऋतो गृहे वसतीत्याहु, तद्यथायथमृत्विज ऋतुयाजान् यजन्त्यसम्प्रदायम्, तद्यदृतून् कल्पयति, यथायथ जनिता । तदाहु, नर्त्तप्रैषी प्रेष्येयुर्नर्त्तु प्रैषी वषट् कुर्यु, वाग्वा ऋतुप्रैषा,

यदन्तरूप, यदसौ लोकोऽभ्युदितः, यन्नाभानेदिष्ट, यत् प्राक्छेय, यन्नाराशंसं, यद् द्वैपदा, यत् सप्तपदा, यत् ऋत, यद्रैवत, तत्तृतीयस्याह्नो रूपम्। एतानि वै षष्ठस्याह्नो रूपाणि छन्दसासु ह षष्ठेनाह्नाप्तानां रसो निनेजत्, तं प्रजापतिरुदानए नाराशंस्या गायत्र्या रैभ्या त्रिष्टुभा पारिक्षित्या जगत्या गाथया अनुष्टुभा एतानि वै छन्दांसि षष्ठेऽहनि शस्तानि भवन्ति अयातयामानि, छन्दसामेव तत् सरसतया अयातयामतायै। सरसानि ह्यस्य छन्दांसि षष्ठेऽहनि शस्तानि भवन्ति, सरसैः छन्दोभिरिष्टं भवति, सरसै छन्दोभिर्यज्ञं तनुते, य एव वेद ॥ ११ ॥

अथ यद् द्वैपदी स्तोत्रियानिरूपौ भवत, इमा नु क भुवनासीषधामेति। द्विपाद्वै पुरुष', द्विप्रतिष्ठ पुरुष, पुरुषो वै यज्ञ, तस्माद् द्वैपदी स्तोत्रियानुरूपौ भवत'। अथ सुकीर्त्तिं शंसति, अपेन्द्र प्राचो मघवन्नमित्रानिति। देवयोनिर्वै सुकीर्त्ति', स य एवमेता देवयोन्यां सुकीर्त्तिं वेदकीर्त्तिं प्रतिष्ठापयति, भूताना कीर्त्तिमान् स्वर्गे लोके प्रतितिष्ठति। प्रतितिष्ठति प्रजया पशुभि', य एव वेद। अथ वृषाकपिं शंसति, विहि सोतोरसृक्षतेति। आदित्यो वै वृषाकपि, तद्यत् कम्पयमानो रेतो वर्षति, तस्मात् वृषाकपि', तत् वृषाकपेर्वृषाकपित्वं कपिरिव वै सर्वेषु लोकेषु भाति, य एव वेद। तस्य तृतीयेषु पादेष्वाद्यन्तयोर्न्युङ्खनिनर्दौ करोति, अन्न वैन्यूङ्ख, बल निनर्द, अन्नाद्यमेवास्मै तद् बले निदधाति। अथ कुन्तापं शंसति, कुय ह वै नाम कुत्सित भवति, तद्यत्तपति, तस्मात् कुन्तापा, तत् कुन्तापाना कुन्तापत्वम्। तप्यन्तेऽस्मै कुयानिति तत्कुय स्वर्गे लोके प्रतितिष्ठति। प्रतितिष्ठति प्रजया पशुभि, य एव वेद। तस्य चतुर्दशप्रथमा भवन्ति, इदं

ऐतशो ह मुनिर्यज्ञस्यायुर्ददर्श। स ह पुत्रानुवाच, पुत्रका यज्ञस्यायुरभिदृष्टवस्तदभिलपिष्यामि मा मा दृप्त मन्यध्वमिति। तथेति तदभिललाप। तस्य ह इत्यग्निरैतशायनो ज्येष्ठ पुत्रोऽभिदृत्य मुखमपि जग्राह, वृव, दृप्तो न पितेति। स होवाच, धिक् त्वा जाल्मापरस्य पापिष्ठान्ते प्रजां करिष्यामीति। यो मे मुख प्रागृहीष्यो यदि जाल्म मे मुख माग्रहीष्य., शतायुष गामकरिष्यं सहस्रायुष पुरुषमिति। तस्मादप्यग्नय ऐतशायना आजानेया सन्त. पापिष्ठामन्येषा बलिहृत पितायच्छ ता स्वेन प्रजापतिना स्वया देवतया। यदेतश प्रलाप', तत् स्वर्गस्य लोकस्य रूपम्। यद्वेवैतशः प्रलाप, यातयामा वा चिति', ऐतशैतशः प्रलापो यातयामा मे यज्ञ सदचिति मे यज्ञो सदिति। त वा ऐतशैतशप्रलापं शसति, पदावग्राहन्तासामुत्तमेन पदेन प्रणौति, यथा निविद'। अथ प्रवह्लिका पूर्वशस्त्वा वितती किरणौ द्वाविति प्रतिराधानुत्तरा. शसति, भुगित्यभिगत इति प्रवह्लिकाभिर्हं वै देवा असुराणा रसाम्प्रवहुः। तद्यथाभिर्हं वै देवा असुराणा रसा प्रवहुः, तस्मात् प्रवह्लिका', तत् प्रवह्लिकाना प्रवह्लिकात्वम्। ता वै प्रतिराधै. प्रत्यराध्नुवन्। तद्यत् प्रतिराधै. प्रत्यराध्नुवन्, तस्मात् प्रतिराधा., तत् प्रतिराधानां प्रतिराधत्वम्। प्रवह्लिकाभिरेव द्विषता भ्रातृव्याना रसां प्रवह्लिकास्ता वै प्रतिराधै' प्रतिराध्नुवन्ति, ता. प्रग्राहमित्येव। पथाजिज्ञासेन्या' शसति, इहेच्छ प्रागपागुदगधरागिति। पाजिज्ञासेन्याभिर्ह वै देवा असुरानाज्ञाय अथैनानन्यायन्, तथैवैतद्यजमाना अजिज्ञासेन्याभिरेवाप्रिय भ्रातृव्यमागायाथैनमतियन्ति। ता अर्धर्चशः शसति, प्रतिष्ठित्या एव। अथातिवाद शसति, यौ इमे देवा अक्रसतेति। चौर्वा अतिवाद-

जरित' प्रत्यायन्निति, प्रतिहितेषु मायंस्तां ह जरितर्न' प्रत्यग्टभ्णन्निति, न ह्रीमां पृथिवी प्रत्यग्टभ्णस्तामु ह जरितर्न प्रत्यग्टभ्णन्निति, प्रग्टह्यादित्यमग्टभ्णन् न ह्यने-तरस्य विचेतनानीति। एष ह वा अनृहा विचेता, योऽसौ तपति। स वै शसति, यज्ञानेतरस न पुरोगवास इति। एष ह वै यज्ञस्य पुरोगवो, यद्दक्षिणा यथार्होम' स्वस्तमितिर्ग्ति-दन्त्येष एवेश्वर उन्नेता। उत श्वेत आशुप त्वा उतोपद्याभि-र्यविष्ठः। उतेमाशुमा न पिपर्तीत्येष एव श्वेत एष शिशुपत्येष उतोपद्याभिर्यविष्ठ उतेमाशुमान पिपर्तीति, आदित्या रुद्रा वसवस्ते नुत इद राध. प्रतिग्टभ्णीह्यङ्गिर। इद राधो विभु प्रभुरिद राधो हहत्पृथु। देवा ददत्वासुरन्तद्वो अस्तु सुचे-तनम्। युष्माए अस्तु दिवे दिवे प्रत्येव ग्टभायतेति। तद्य-दादित्याश्चाङ्गिरसोय शसति, स्वर्गताया एवैतदहरह शसति, यथा निविदोऽथ भूतेच्छन्दः शसति, त्वमिन्द्र शर्म रिणेतीमे वै लोका भूतेच्छन्दोऽसुरान् ह वै देवा अन्न सेचिरे। भूतेन भूतेन जिघांसन्तस्तितीर्षमाणास्तानिमे देवा सर्वेभ्यो भूतेभ्योऽच्छादयन्। तद्यदेतानिमे देवा' सर्वेभ्यो भूतेभ्योऽच्छा-दयन्,तस्माद्भूतेच्छन्दस्तद्भूतेच्छन्दां भूतेच्छन्दस्त्वम्। छादयन्ति ह वा परमिमे लोका सर्वेभ्यो भूतेभ्यो निरघ्नन्। सर्वेभ्यो भूतेभ्योऽच्छन्दते, य एव वेद ॥ १४ ॥

अथाह नस्या शसति, यदस्या अहु भेद्या इत्याह, न स्याद्वा इद सर्व प्रजातमाह, न स्याद्वा एतदधिप्रजायतेऽस्यैव सर्वस्यास्यै प्रजात्यै। ता वै षट् शसित, षड्वा ऋतव, ऋतव पितर, पितर' प्रजापति', प्रजापतिराह, न स्यात् तादृश शसेदिति। शाभव्यस्य वच', दशाक्षरा विराड्, वैराजो यज्ञ, तद्गर्भा उपजीवन्ति। श्रीर्वै विराड्, यशोऽन्नाद्य, श्रियमेव

